वास्तवद्वैताभावे तु यत्रेति सर्व्वमितत्रभूदिति चासमञ्जसं स्यादितिध्येयम्। अत्र यत्रेत्यस्य परमार्थदशायामित्यर्थं ब्रुवद्भिराचार्य्यैरप्येतत्पक्षस्य वास्तवत्वमङ्गीकृतं वेदितव्यम्। अद्वैतस्य वास्तवत्वे परमार्थस्य दशानियन्त्रितत्वासम्भवात्। अयं तावदष्टादशर्च्चेशोपनिषदर्थसंग्रहः—

अस्याद्ये मानसं कर्म्म द्वितीये कायिकं तथा।
निष्कामं तद्द्वयं मुक्त्यै न कर्म्मिण्यितरद् भवेत्॥१॥
भवेन्निष्कामता त्यागात् फलस्यैव नचात्मनः।
जिजीविषेच्छतमिति प्रतीकेनैतदूहितम्॥२॥
आत्मत्यागिजुगुप्सा च तृतीयर्च्चे निवेशिता।
तृतीयोक्तात्मशब्दार्थश्चतुर्थ्येन प्रकाशितः॥३॥
सर्व्वगात्मस्थिताः प्राणाः अपोऽर्थात् सरसं वपुः।
दधत्यतस्तदप्यात्मसंज्ञं हन्यात् न तत् स्वयम्॥४॥
तृतीयतूर्य्ययोरर्थमिलनात् पर्य्यवस्यति।
निष्कामताप्रसिद्ध्यर्थं चिन्तनं सर्व्वगात्मनः॥५॥
एकत्वचिन्तनं वापि पञ्चमादित्रिकोदितम्।
न तत्त्वतः पुनर्भूतजातैक्यं क्वचिदात्मनः॥६॥
यतो भिन्नो हि जीवात्मा प्रत्यक्षेणैव दृश्यते।
परमात्मापि तद्भिन्नः शुक्रभावप्रतिष्ठितः॥
व्यतरत् सर्व्वभोग्यानि प्रजेशेभ्यो यतः स्वयम्।
इत्युक्तमष्टमे मन्त्रे नवमाद्यं त्रिकं ततः॥
आह देवादिविज्ञानयुक्तो यागः शुभावहः।

न यागः केवलो नापि देवज्ञानमिति स्फुटम् ॥७-९॥
ईश्वराच्छादानध्यानं द्वैते सत्येव सम्भवेत्।
द्वैतज्ञानात्तु मुक्तिः स्यान्नाद्वैतज्ञानमात्रतः ॥१०॥
आत्मा देहादितो भिन्न इति प्रत्यक्षनिश्चयः।
मुक्तौ साक्षाद्भवेद्धेतुर्द्वैतं ज्ञानं विना न तत् ॥११॥
केवलं नात्मनो ज्ञानं न वा देहादिगोचरम्।
इष्टसिद्ध्यै प्रभवतीत्युक्तं तत् परतस्त्रिभिः ॥१२॥
वह्निरालम्बनं सूर्य्यमाश्रयन् जीवमाश्रयेत्।
ऐशध्यानप्रतिष्ठार्थं षोडशार्थोऽयमीरितः ॥१३॥
कर्म्मैव शरणं जन्तोरित्यावेदयितुं ततः।
मरिष्यदुक्त्या कथिता कर्म्मस्मृतिरतः परम् ॥१४॥
न केवलमिदं कर्म्म ध्यानरूपं विमृश्यतां।
यज्ञोऽपि स्मर्य्यते चैतदन्त्यमन्त्रे निरूपितम् ॥१५॥
अधिकारिविशेषार्थः कर्म्मभेदोऽत्र वर्णितः।
फलन्तु तुल्यं कथितमधिकारिप्रवर्त्तकम् ॥१६॥ इति।

यथेशोपनिषदां द्वैतमर्थः तथा तलवकारादीनामपि। तथाहि "केनेषितमिति" परमात्मविषयकः प्रश्नः "श्रोत्रस्य श्रोत्रम्" इति श्रोत्रस्य कर्णशष्कुल्यवच्छिन्ननभसः श्रोत्रं शब्दप्रत्यक्षसाधनतायोजकमित्याद्यर्थकश्रौतवाक्यं तदुत्तरम्। अद्वैतवास्तवले श्रोत्रचक्षुरादीनि तैश्च परमात्मनो योज्य-योजकभावा नोपपद्येरन्। नचोक्तिरियमाविद्यकानुवादरू-पेति वाच्यं द्वितीयश्रोत्रादिशब्दानां प्रमाणान्तरानवगतार्थक-

त्वेनानुवादरूपत्वासम्भवात्। प्रथमश्रोत्रादिशब्दशक्तिज्ञानस्य सति सम्भवे वेदमूलकत्वाभ्युपगमस्यैवौचित्यात्। लौकिकशब्द-शक्त्यधीनतायाः वैदिकशब्देऽभ्युपगन्तुमयुक्तत्वात्। अविद्य-कत्वकल्पनायां युक्त्यभावाच्च। अद्वैतश्रुतिबाधापत्तिरेव युक्ति-रितिचेदन्धपरम्पराप्रसङ्गः, अद्वैतवास्तवताश्रुतेरेवासिद्धत्वात्। अद्वैतवास्तवताबोधकत्वेनाचार्य्यादिव्याख्यातानां तत्त्वमस्यादि-श्रुतीनां बहुतरश्रुतिविरोधेन शास्त्रोपक्रमोपसंहारादिलिङ्ग-बलेन चान्यथोपपादितत्वादुपपादयिष्यमाणत्वाच्च। प्रत्युतात्र "नेदं यदिदमुपासत" इत्यादिना शब्देन "ब्रह्म ह देवेभ्यो विजिग्ये" इत्याख्यायिकया च ब्रह्मणः पृथगाविर्भावं श्रावयन्त्या ब्रह्मणः प्रपञ्चभिन्नत्वमसन्दिग्धं प्रतिपाद्यते। तथाच जाग्रदतिरिक्तो दुर्ज्ञेयः परमात्मा स चोपास्य इति तलवकारोप-निषदर्थः। अपिच कठोपनिषत्सु नचिकेतसा प्रार्थितानां वराणां तृतीयःखल्वात्मज्ञानार्थः स चात्मत्वेन ज्ञानाश्रयत्वेन वा परमात्मानं जीवात्मानञ्च व्याप्नोति। तत्र परमात्मप्रतिपादनाय प्रणवोपदेशः प्रथमः, "न जायते म्रियते वे"त्यादिना जीवात्मोप-देशो द्वितीयः। नन्वेक एवायमात्मा न पुनः परमात्मा जीवात्मा चेति द्वैविध्यमित्याशङ्क्य यतस्तृतीयवल्ली ऋतं पिबन्ताविति द्विवचनेनात्मद्वैविध्यमुपपादयति, रूपकविन्यासा-देश्च। "आत्मानं रथिनं विद्धीति" रूपकविन्यासे जीवात्मोप-देशः "इन्द्रियेभ्यः पराह्यर्थाः" इति च तत्त्वोपन्यासे जीवपर-मात्मनोरुपदेशः। तथाहि—"इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च

परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्नपरं किञ्चित्सा काष्ठा सा परागतिः” इति काठकमन्त्रौ। अत्र इन्द्रियेभ्य इति शरीरेन्द्रियाणां ग्रहणं, रथाश्ववदन्योन्यसंबन्धात्तेषाम्। तत्र शरीरापेक्षयेन्द्रियाणां परत्वं स्फुटमेव सूक्ष्मत्वादिति न तस्य कण्ठतो ग्रहणम्। बुद्धिर्ज्ञानम्। अनवच्छिन्नपरिमाण आत्मा जीवाख्यः ततः परः कारणत्वात्, तस्मादव्यक्तम् अदृष्टं परम् अदृष्टवशेन हि जीवात्मनोऽस्मिन्ननादौ संसारचक्रे घटीयन्त्रवद् बंभ्रम्यमाणत्वात्, पुरुषः परमात्मा ईश्वरस्तस्मादव्यक्तात् परः अधिष्ठातृत्वात्। तदधिष्ठितस्यैवादृष्टस्य फलोपधायकत्वसम्भवात्। न चेदं रूपकस्यैव विवरणम् अत्रात्मपुरुषयोरन्योन्यभिन्नयोरुपादानम् रूपके त्वेकस्यात्मन इति पार्थगर्थ्येन विवरणरूपत्वासम्भवात्। नचात्रात्मपदं मतान्तरसिद्धमहत्तत्त्वपरं शरीरपरं वेति विवरणरूपत्वसम्भव इति वाच्यमत्रबुद्धेः पृथगुपादानेनात्मपदस्य महत्तत्त्वपरत्वे पौनरुक्त्यादानर्थक्याच्च। न च व्यष्टिसमष्टिभेदाद्द्विविधस्य महत्तत्त्वस्य द्विधोपादानमिति युक्तं सन्दर्भविरोधात् व्यष्टिसमष्टिभेदेन द्विविधानामपीन्द्रियाणामेकेन सामान्यरूपेणोपादानं प्रक्रम्याकस्माद् बुद्धेर्द्वैरूप्येणोपादानस्यान्याय्यत्वात्। शरीरपरत्वे च महानितिविशेषणानर्थक्यात् महत्परिमाणभिन्नस्य शरीरपरिमाणस्यासम्भवात्। द्विजशब्दस्य ब्राह्मणपरत्ववत् महच्छब्दस्य परममहत्परत्वे तु पुरुषपदोक्तपरमात्मभिन्नस्य कस्यचित् परममहत आत्मनो

ऽवगमात्। स च जीवात्मा न तु शरीरं, शरीरस्य परमम-हत्परिमाणाप्रसिद्धेः। "महान्तं विभुमात्मानं मत्वा धीरो न शोचतीति" जीवात्मन एव महच्छब्दार्थविशेष्यतया द्वितीयवल्ल्यामाम्नातत्वात् उपदिष्टार्थस्यैवासति बाधे ग्रहीतुमुचितत्वाच्च। अपिच षष्ठवल्ल्याम् 'इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा महतोऽव्यक्त-मुत्तमम्। अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज् ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छतीति।" इन्द्रियशब्द लक्षितेभ्यो वहिरिन्द्रियदेहविषयेभ्यो मनः परं श्रेष्ठं सूक्ष्मत्वात्, यदि देहविषयापेक्षया सूक्ष्मेभ्यो वहिरिन्द्रियेभ्यो मनः श्रेष्ठं किमु वक्तव्यं देहविषयेभ्यः श्रेष्ठमिति तात्पर्य्यात् मनसोऽपि सत्त्वं द्रव्यादित्रिकवृत्ति जातिरुत्तमम् तदधीनवृत्तिकत्वा-न्मनसः, महानात्मा नाम जीवात्मा तस्मादधिकः भोक्तृत्वात् प्रागुक्तहेतुना तदपेक्षया श्रेष्ठमव्यक्तं नामादृष्टं, ततः श्रेष्ठः खलु व्यापकोऽलिङ्गः पुरुषः योऽसावीश्वर इति परमात्मेति भगवानिति ब्रह्मेति च शब्द्यते। तदवगमो निःश्रेयसहेतुरिति तद्व्याख्यानम्। आत्मबुद्ध्या ये मन उपासते तेषां फलमात्म-बुद्ध्येन्द्रियोपासकफलापेक्षया प्रकृष्टतरमिति ज्ञापनं मनसः परत्वकथनस्य प्रयोजनम्। ये हि योगबलेनातीन्द्रियेऽपि मनसि सत्त्वं साक्षात् कुर्व्वन्ति, ते तावदात्मत्वेन मन उपासीनानां मध्ये श्रेयांस इति ज्ञापनं सत्त्वस्योत्तमत्वकथनप्रयोजनम्। स्वात्मसाक्षात्कारस्य साक्षान्निःश्रेयसहेतुत्वं तस्य तु हेतुः

परमेश्वरसाक्षात्कारजन्यशुभादृष्टमिति ज्ञापनं तस्य तस्याधिक्यकथनस्य प्रयोजनमिति परमार्थं एवं पूर्व्वत्र। देहाद्यतिरिक्तत्वेन जीवात्मसाक्षात्कार एव मुक्तौ साक्षात्कारणमित्युपपादनाय प्रथमं रूपकोपन्यासः। जीवात्मसाक्षात्कारश्च परमात्मसाक्षात्कारजं शुभादृष्टं विना न घटते जीवात्मा परमात्मा चान्योन्यं भिद्यत इत्येतदुपपादनाय जीवात्मनि देहाद्यतिरिक्तत्वानुवादपूर्व्वकस्तत्त्वोपन्यासः। अथ रूपकोपन्यासवत्त्वेन तत्त्वोपन्यासमन्त्रौ किमेकात्मपरतया कथञ्चिन्नेयौ उत तदीययथाश्रुतार्थवत्त्वेनात्मद्वैविध्यमादरणीयमित्येतदापतित शङ्कानिरासाय इन्द्रियेभ्यः परंमन इत्यादि मन्त्रौ। तथाचात्म द्वैविध्यमेव तत्त्वम्। एकत्र सप्रयोजनेन आत्मद्वैविध्याकथनमात्रेण भूयसामात्मद्वैविध्यप्रतिपादकानां स्फुटवचसामन्यथाकारस्यायुक्तत्वात्। सर्व्वत्रैव स्वात्मसाक्षात्कारस्य फलोपायौ दर्शितौ, तत्र उपायप्रदर्शनन्तु दिङ्मात्रं न तु निरवशेषमित्येतत्सूचनाय क्वचित् किञ्चिद्वैलक्षण्यमुपात्तम्। तथाचेन्द्रियेभ्यः पराह्यर्था इत्यादिवत् इन्द्रियेभ्यः परं मन इत्यादयोऽपि मन्त्राः न रूपकविवरणभूताः, आत्मपुरुषयोर्भेदेनोपदेशात्, फलोपाययोः पूर्व्वमुपदिष्टत्वेन विवरणस्य निष्प्रयोजनकत्वाच्च। नचैवं जीवात्मन ऐक्यमापद्यते, नतु नानात्वमिति शङ्क्य "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः" इति "चेतनश्चेतनानाम्" इति च जीवनानात्वस्य चेतननानात्वस्य च पञ्चमवल्ल्यामुपदेशात्। ऐक्यन्तु भोगाश्रयत्वेनोपाधिना सुखादि-

समवायिकारणतावच्छेदकजातिमत्त्वेन वा समर्थ्यते, भवति हि व्रीहिव्यक्तीनामनेकत्वेऽपि सम्पन्नो व्रीहिरिति प्रयोगः। नन्वग्निर्यथैकोभुवनं प्रविष्ट इत्यादिमन्त्रे प्वात्मैक्यमुपदिष्टमिति-चेत् सत्यमुपदिष्टं तत्तु परमात्मन एव सर्व्वभूतान्तरात्मेत्यु-पादानात् यः पृथिव्यां तिष्ठन् इत्यादिवृहदारण्यकश्रुतिभिः परमात्मन एव सर्व्वभूतान्तरात्मत्वोपपादनात् काठकेऽपि तमा-त्मस्थं येऽनुपश्यन्तीति चेतनश्चेतनानामित्यत्र चात्मान्तरस्यै-कस्योपदर्शितत्वाच्च। अथ परमात्मनो जीवात्मस्थत्वं विरुद्ध-मिति चेन्नैष दोषः प्रतिमास्थो देव इतिवदुपासनोपयोगित्वे-नात्मस्थत्वकीर्त्तनात् जीवात्मानमवलम्ब्य परमात्मयोगस्य साधनीयतायाः प्रागुक्तत्वात्।

अथैवमपि प्रसज्यते विरोधः "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति," "नेह नानास्ति किञ्चनेति" च चतुर्थवल्ल्या-मद्वैततत्त्वप्रतिपादनादिति चेद् भ्रान्तोऽसि आत्मानित्यत्वस्य भावक्षणिकत्वस्य च निरासेन स्थिरद्वैतपक्षस्यैव तत्र दृढ़ी-कृतत्वात्। भवति हि प्रथमो मन्त्रः "यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।" इति। अस्यार्थः यद् जीवात्माख्यं वस्तु इह लोके, तदेव अमुत्र परलोके, यच्च परलोके तत् इहलोके अनुवर्त्तते इह ध्वस्तचरमप्राणसंयोगो जीवात्मा परलोकगतो भवतीत्युच्यते, तथाविधो जीवश्च पुनरस्मिन् लोके विजातीयशरीराद्यप्राण-संयोगलक्षणं जन्मानुभवति नतु जीवात्मा विनश्यति कश्चिदपूर्व्वो

वा जायते इत्यर्थः। इह लोके यः पुरुषः नानेव पश्यति तदिति-शेषः इहेति इदमित्यर्थकं वा स्वात्मानमेव शैशवयौवनादिभेदेन विभिन्नमिव मन्यते स देहाद्यात्मदर्शी, मृत्योः संसारात् मृत्युं संसारान्तरम् आप्नोति, तथाच देहाद्यात्मदर्शनं हेयमिति-निष्कर्षः। अत्र नानेवेतीवकारेण द्वैतमेव दृढ़ीकृतम्। यदि नाम नानेति मृषा स्यात् नानेव पश्यतीति वन्ध्यापुत्रमिव पश्यतीति च द्वयं तुल्यं स्यात् उपमानस्याप्रसिद्धत्वात्। न च तथाविध वाक्यार्थस्तावदाचार्य्यानुगैरप्यभ्युपगन्तुं शक्यते, सौगतमतनिरासावसरे बहिर्व्वदवभासत इति तदुक्तिमाश्रित्य वत्कारेण तेषां वाह्यास्तित्वाभ्युपगमस्य भगवद्भिराचार्य्यैरुपपादितत्वात्। द्वैतपक्षे तु नानेति सत्यमेव, त्रिचतुरादिव्यक्तिपर्य्याप्तस्य नानात्वस्य तथाविधसमुदाय एव प्रसिद्धेः, सन्ति च नानैव पदार्थाः, एकव्यक्तौ तु नानात्वं न पर्य्याप्नोति, तेन नानात्वमनापन्नैकव्यक्तिर्यदि नानात्वापन्नावभासते युज्यत एव तत्रेवकारप्रयुक्तिः, रज्जुरियं सर्पइवावभासत इतिवत्। तस्मान्नोपमानाप्रसिद्धिनिबन्धनो दोषोऽस्मिन् पक्षे सम्भवति।

अथैवमपि नेह नानास्ति किञ्चनेत्यस्य का गतिरितिचेद्दुर्गतिरद्वैतवादस्येतिब्रूमः तथाहि नानात्वप्रतिषेधे किञ्चनेति व्यर्थं नेह नानेत्यनेनैव गतार्थत्वात् नाना नास्तीत्यपि दुरुक्तं प्रतियोगिनः सिद्धासिद्धिभ्यां व्याघातात्। द्वैतपक्षे तत्सङ्गतिप्रकारो यथा, ननु नित्यो जीवात्मेत्युच्यते तन्न युक्तं भावमात्रस्य क्षणिकत्वादित्याक्षेपं परिहरन्नयं मन्त्र उत्तिष्ठते "मनसैवेद-

माप्तव्यं नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह-नानेव पश्यति।" इति। अस्य विवृतिस्तु नहि भावाः क्षणिकाः सोऽयं घट इति योऽहमद्राक्षं सोऽहं स्मरामीति च प्रत्यभिज्ञानात्। न च सन्तानगोचरोऽयं प्रत्ययः। असति बाधे एकत्वेन ज्ञायमानस्य नानात्वकल्पनाया अन्याय्यत्वात्। एकत्वेन प्रमाणसिद्धं वस्तु किञ्चनेत्यनेन गम्यते वचनसामर्थ्याद् योग्यत्वाच्च। तादृशवस्तुनि नानात्वप्रतिषेधाय नेह नानास्तीति। नानात्वं नानावस्तुषु पर्य्याप्तं नत्वेकत्रेति द्वैतवादिमतं प्रागुक्तम्। एकत्वेन प्रमाणसिद्धे वस्तुनि नानात्वं नास्ति, तस्माद् भावमात्रं क्षणिकमिति मतमनुपादेयमिति परमतमपाकृत्यानुशास्ति मनसैवेदमाप्तव्यमिति। स्थिरं हि मनः स्थिरश्चात्मा, ततस्तत्सम्बन्धो नानुपपन्नः, तेन च योगजसम्बन्धेन लब्धव्यमात्मतत्त्वमिति। यस्तु स्थैर्य्यमवमत्य एकत्वेन प्रमाणसिद्धमपि वस्तु नानात्वापन्नमिव मन्यते तस्य कुतर्कोपहतचित्तस्य श्रवणमननिदिध्यासनविरहेण संसारात् संसारान्तरगमनं दुर्निवारमित्याह मृत्योरिति।

तस्माद् यदेतदद्वैतवादिनामेकायनं प्रमाणं तदपि द्वैतपक्षमेव दृढ़ीकरोतीति।

प्रश्नोपनिषत्सु च परमात्मतत्त्वज्ञानप्रकारतदुपायफलानां द्वैतमुखेन प्रतिपादनमस्ति। तत्र मुख्यप्राणो जीवात्मा। जात्यभिप्रायेण तस्यैक्यं तस्मिंश्च सर्व्वं प्रतिष्ठितं भोग्यत्वात् अदृष्टतन्त्रत्वाच्च। नन्वात्मन एष प्राणो जायत इत्यनुपपन्नं

भवन्मते जीवात्मनो जन्मानभ्युपगमादिति चेत् सत्यम् उत्पत्ति लक्षणं जन्म जीवात्मनो नास्ति विजातीयशरीराद्यप्राणसंयोगलक्षणं जन्म त्वभ्युपगम्यत एव तथाविधजन्मनः परमात्मकारणकत्वेनात्मन एष प्राणो जायत इति नानुपपन्नम्। जीवात्मैव विज्ञानात्मा पुरुष इत्युच्यते। परमात्मा चापरः पुरुषः। जीवात्मनः पञ्चभूतादिमनोऽन्ताः षोड़श कलाः तादूप्येण भ्रमविषयतया अंशाइव स्थिताः, परमात्मसाक्षात्कारफलेन जीवात्मभिन्नतया ज्ञायन्त इति विलीयन्त इत्युच्यते। धनाभिमानरहितस्य धनानीव। ततो विज्ञानात्मा स्वेनैव रूपेणावतिष्ठत इत्ययमुपसंहारः। मुण्डकोपनिषत्सु च विद्यास्वरूपतदधिगमोपायफलानां द्वैतमुखेन प्रतिपादनमस्ति तथाहि केन विज्ञातेन सर्व्वं विज्ञातं भवतीति प्रश्नः विद्याद्वयेनेत्युत्तरमुपक्रम्य विद्याद्वयस्वरूपं नामभेदेन ज्ञेय-भेदेन च भिन्नतयोपदिष्टमुपदिष्टश्च फलभेदः। आत्मसामान्यज्ञानं ब्रह्मविद्याफलं तत्र सृष्टिकर्त्तृत्वेन "यः सर्व्वज्ञः सर्व्वं वित्" इति सार्व्वज्ञेन च प्रथमं परमात्मतत्त्वमुपवर्ण्य तस्य सर्व्वमूर्त्तसंयोगित्व बोधनायोपासनाविशेषाय वा सर्व्वात्मत्वमुक्तम्। मन्त्रक्रमश्चात्र भवति तत्र प्रथमः—

"द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।"

द्वौ सयुजौ सह सर्व्वमूर्त्तयोगिनौ सखायौ समानधर्म्माणौ ज्ञानाद्याश्रयत्वात्। सुपर्णौ पक्षिणाविव जीवात्मपरमात्मानौ समानमेकं वृक्षं शरीरं परिषस्वजाते। तयोरन्य एकः जीवात्मा स्वादु पिप्पलं कर्म्मफलमत्ति अन्यः परमात्मा अनश्नन् अभिचाकशीति पश्यत्येव। अत्र जीवात्मपरमात्मनोः पृथक्त्वेन निर्द्देशः।

द्वितीयः

"समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः।"

समाने वृक्षे पूर्व्वोक्ते निमग्नः पुरुषो जीवात्मा अनीशया अनैश्वर्य्येण सम्यग्दर्शनविरहेणेति यावत् मुह्यमानः मिथ्याज्ञानवान् शोचति दुःखमनुभवति, यदा जुष्टं योगिजनसेवितम् अन्यम् ईशं परमात्मानं पश्यति अस्य ईशस्य महिमानञ्च पश्यति ऐश्वर्य्यवत्तयेश्वरं पश्यतीति यावत् इति अस्मिन्काले अतो हेतोर्व्वा वीतशोकः भवतीति शेषः। अत्र जीवात्मनः स्वभिन्नपरमात्मदर्शनं निःश्रेयसहेतुरित्युच्यते।

तृतीयः

"यदा पश्यः पश्यते रुक्मवर्णं—
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति।"

पश्यः द्रष्टा साधकः यदा रुक्मवर्णं कर्त्तारं विश्वस्रष्टारं ब्रह्मयोनिं वेदवक्तारं पुरुषम् ईशं पश्यते पश्यति तदा विद्वान् तत्त्वज्ञः पुण्यपापे विधूय हित्वा निरञ्जनः निर्मलः परमं साम्यम् ईश्वरस्येतिशेषः—उपैति।—

अत्र सर्व्वकर्त्तुर्व्वेदवक्तुरीश्वरस्य दर्शनेन जीवात्मनस्तत्-परमसाम्यरूपनिःश्रेयसप्राप्तिरभिधीयते। अद्वैतवादिमते तद्-भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वरूपं साम्यं मोक्षदशायां जीवात्मनः कथमपि नोपपद्यते ब्रह्मस्वरूपत्वान्मोक्षस्य। न च परमं साम्यमिति वाक्यमभेदबोधकमिति शङ्क्यं भेदगर्भसाम्यस्य परमत्वे भेदांशस्य विलोपासम्भवात् न हि परमसन्न्यासो विषयेष्वुत्कटरागेण सम्पाद्यो भवति। तस्माद्द्वैते सत्येव मुक्ति-रिति फलितम्।

चतुर्थः

"प्राणो ह्येष यः सर्व्वभूतैर्व्विभाति
विजानन् विद्वान् भवते नातिवादी।
आत्मक्रीड़ आत्मरतिः क्रियावा-
नेष ब्रह्मविदां वरिष्ठः।"

यः सर्व्वभूतैर्विभाति एष प्राणो जीवात्मा तं विजानन् अतिवादी बहुभाषी न भवति कथारागाभावात्। एष आत्म-क्रीड़ आत्मरतिः क्रियावान् याज्ञिकः—ब्रह्मविदां वरिष्ठः श्रेष्ठः।

अत्र यादृशमात्मतत्त्वज्ञानं न यज्ञादिक्रियाविरोधि तादृशमेव ज्ञानं प्रमारूपं साक्षान्निःश्रेयससाधनञ्चेति ज्ञाता प्रशस्यते ब्रह्मविदां वरिष्ठ इति। नह्यद्वैतज्ञानं तादृशं भवति तद्दशायां क्रियावत्त्वस्यासम्भवात्। असकृदुपपादितो हि भगवद्भिराचार्य्यैरद्वैतज्ञानेन क्रियावत्त्वस्य विरोधः। तस्मात् पूर्व्वं यदुक्तं पुरुष एवेदं सर्व्वमिति तत् सर्व्वमूर्त्तसंयोगित्वबोधकं ताद्रूप्येण ध्यानार्थं वा न तु तत्त्वतः सर्व्वात्मत्वप्रदर्शनार्थम्। तत्त्वन्तु द्वैतमेव। तदभिज्ञस्यात्मतत्त्वज्ञानवतः क्रियावत्त्वसम्भवात् तस्य च वरिष्ठत्वेनाभिधानात् तथाचामी क्रमिकाश्चत्वारो मन्त्रा न्यायशास्त्ररसिकानां सिद्धान्तमवगमयन्ति।

अतएवोक्तं

"प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदिति"।

लक्ष्याभ्यन्तरप्रविष्टस्य शरस्य यथा पृथगस्तित्वं न विभाव्यते तथा मुक्तस्य जीवात्मनोऽपि, तदीयज्ञानादिविरहादिति भावः। अद्वैतवास्तवत्वे शरलक्ष्यभावानुपपत्तिः, शरवदित्युपमानासङ्गतिश्चेति ध्येयम्।

नन्वेवं—

"गताः कलाः पञ्चदश प्रतिष्ठा
देवाश्च सर्व्वे प्रति देवतासु।
कर्म्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व्व एकीभवन्तीति"

मन्त्रेण परेऽव्यये इत्यर्थाद्ब्रह्मणि जीवात्मनः सर्व्वेषाञ्चैक्याभिधानादायातमैकात्मवादेनेति चेन्न चित्प्रत्ययानुपपत्तेः। तस्याभूततद्भावे विधानात्। यद्येकात्मत्वं पारमार्थिकं कथमभूततद्भाववचनमुपपद्येत। नचासौ व्यावहारिकानुवादः। पारमार्थिकाद्वैतस्याद्याप्यसिद्धत्वात्। क्षीरे नीरैक्यवद् द्वैते ह्येकीभावस्य दृष्टत्वात्। द्वैतपक्षे प्रकृतार्थाविरोधाच्च। "परिमुच्यन्ति सर्व्वे" इति प्रकृतं तदुपयोगि समाधिद्वयमुच्यते 'गताः कला' इति 'यथानद्य' इति च द्वाभ्याम्। तत्र प्रथमेनास्मितानुगतान्तः सम्प्रज्ञातसमाधिः, तथाच परमात्मन्यस्मितामात्रानुगमादेकीभावः अन्येषाञ्च भावानां यथासम्भवं विचाराद्यनुगतसमाध्यवस्थाभेदेन प्रागेव विलयनात् सर्व्वेषामेकीभावश्चाविरुद्धः। द्वितीयेन चासम्प्रज्ञातसमाधिः। स च परमात्मसाक्षात्कार पर्य्यवसानः। स हि साक्षात्कारः "परात्परं पुरुषमुपैतीति" वाक्येन ज्ञाप्यते। अतएव तदनन्तरं ब्रह्मज्ञानं प्रशंसितं "स यो ह वै परमं ब्रह्म वेद ब्रह्मैव भवतीति"। न च ब्रह्मैव भवतीत्येकत्वप्रसक्तिरिति वाच्यं एवकारेण भवतिपदेन च तद्बाधात्। न ह्यद्वैतवादिमते पूर्व्वमसिद्धो ब्रह्मभावो ज्ञानेन साध्यते येन भवतीति स्यात्, नाप्येवकारः व्यावर्त्त्यविरहेण वैयर्थ्यात्। द्वैतवादिमते तु परमात्मपरमसाम्यं प्राप्नोतीति ब्रह्मैव भवतीत्यस्यार्थः सुघट एव। एवकारेण परमसाम्यस्य बोधनसम्भवात् राजेव भवत्ययं श्रेष्ठीतिवत् तथाविधसाम्यप्राप्तेः साध्यत्वाच्च भवतिशब्दप्रयोगे बाधाभावात्। यद्वा पञ्चदश-

शरीरोपादाननिमित्तानि पञ्च भूतानि रूप-रस-गन्ध-स्पर्श शब्दाः शरीरचारिणः प्राणाद्याः पञ्च वायव इति पञ्चदशांशाः प्रतिष्ठा गताः विनष्टाः, देवा ज्ञानेन्द्रियाणि कर्म्माणि कर्म्मसाधनानि हस्ताद्यवयवाः देवतासु महाभूतरूपासु भूतात्मकतत्तदिन्द्रियाद्यधिष्ठात्रीषु वा एकीभवन्ति महाभूतेषु समष्टीन्द्रियादि देवशरीरेषु वा विलीयन्ते, तद्गतवृत्तधर्म्मम् इन्द्रियत्वादिकं परित्यजन्तीति यावत् एवं विज्ञानमय आत्मा जीवात्मा परमात्मन्येकीभवति परमात्मव्यावृत्तसुखदुःखादिधर्म्मं परित्यजतीत्येवं मन्त्रार्थो बोध्यः। सर्व्व एकीभवन्तीति मुक्तिस्वरूपमेतत्। अनया दिशा मन्त्रान्तरार्थः परिष्कार्य्यः। अर्थद्वयमेव द्वैतपक्षे सङ्गच्छते च्विप्रत्ययासङ्गत्यादिना च प्रदत्तदोषस्याद्वैतपक्ष इति।

माण्डुक्योपनिषत्सु प्रणवध्यानमुपदिष्टम्। प्रणवस्य सर्व्वस्वरूपत्ववचनञ्च ध्यानशुद्ध्यर्थं सर्व्वं खल्विदं ब्रह्मेतिवत् शब्दात्मनः प्रणवस्य साक्षात् सर्व्वस्वरूपताया अद्वैतमतेऽप्यसम्भवात्। प्रणववाच्यस्यात्मा तत्र जीवात्मनो बद्धमुक्तावस्थाद्वयं पादचतुष्टयवर्णनद्वारा व्याख्यातम्। तृतीयपादलक्षणसुषुप्तिवर्णनमुखेन जीवात्मनि परमात्मत्वमारोप्य योगभूमिसमाश्रयप्रकारो दर्शितः। इत्येतदन्ता बद्धावस्था। तुरीयपादे मुक्तिस्वरूपनिर्द्देशः। तच्च स्वरूपं नैयायिकाभिमतम्, "नान्तःप्रज्ञं न वहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञम्" इति ज्ञानसम्बन्धप्रतिषेधात्। अथ नाप्रज्ञमिति प्रतीकान्तरेण ज्ञानसम्बन्धाभावोऽपि प्रतिषिद्धः तच्च

नैयायिकानभिमतम् इतिचेन्नैवं पूर्व्वंप्रज्ञासत्त्वेनाप्रज्ञत्वस्य स्वाभाविकजाड्यार्थकस्य खर्परपाषाणादिवृत्तेरव नाप्रज्ञमित्यनेन प्रतिषेधात्। यद्यद्वैतवाद्यभ्युपगतमुक्तिस्वरूपमपरोक्षानुभवात्मकब्रह्मात्र विवक्षितं स्याद् भावमुखेन प्रज्ञात्मकत्वेनैवोच्येत। नत्वेवमभावमुखेन प्रज्ञाप्रतिषेधेन वा। नन्वेवं शान्तं शिवमद्वैतमिति प्रतीकान्तरेणाद्वैतमुपदर्शितमिति चेन्नायं दोषः यतो ज्ञानसामान्याभावाद्द्वैतधीविरहेण तत्राद्वैतमिति व्यपदेष्टुं शक्यते नैरूप्यमिव जात्यन्धतायाम्। प्रपञ्चोपशममित्यस्यापि प्रपञ्चज्ञानाभावेन तत्राहंममेत्यभिमानशून्यत्वमित्यत्रैव तात्पर्य्य नतु प्रपञ्चस्यालीकत्वेऽपि। तथात्वे लीकप्रतियोगित्वाप्रसिद्ध्या वन्ध्यापुत्रमरणवत् प्रपञ्चोपशमस्यैवाप्रसिद्धिः स्यात्। अथनालीकं किन्त्वनित्यं प्रतिपादितं, तस्य लय एवोपशम इति चेदेकमुक्तौ सर्व्वमुक्तिप्रसङ्गः। किञ्च भवद्भिः प्रपञ्चस्य समुदायात्मकस्य एकैकव्यक्तिमुपादाय सर्व्वासामेव व्यक्तीनामनित्यत्वमभिप्रेयते नवा? आद्ये तद्बाधः,—आकाशनित्यत्वस्य सृष्टश्रुत्या साधयिष्यमाणत्वात्। अन्त्ये निर्व्विशेषत्वं जाग्रदाद्यवस्थायामपि कस्यचिन्नाशसम्भावात्। नित्यातिरिक्तप्रपञ्चोपशममितिचेद् भवेदेतं यदि सर्व्वमुक्तिःस्यात्। अथ जीवभेदेन प्रपञ्चो भिद्यते, एकस्य प्रपञ्चोपशमेऽप्यन्यस्य प्रपञ्चानुपशमः सुघटएवेति मैवं भूतादिसृष्टेरीश्वरकृतत्वश्रवणात् जीवभेदेन तद्भेदासम्भवात्। अपिच जीवभेदोऽयं स्वाभाविक औपाधिको वा स्वाभाविकश्चेदायातं द्वैतेन, औपाधिकश्चेत् स

उपाधिः प्रपञ्चान्तर्गतो नवा ? आद्ये प्रपञ्चभेदात् प्रपञ्चभेद इतस्यैव पर्य्यवसन्नत्वादात्माश्रयः, अन्त्ये—अद्वैतमित्युक्तस्वरूपबाधः, उपाध्यनुपशमात्; नच तदानीं प्रपञ्चोपशम उपाधुरपशमश्च इयमेव भवतीति वक्तव्यं सुषुप्तोत्थितस्य सुखमहमस्वाप्सं नकिञ्चिदवेदिषमिति भवदभ्युपगते परामर्शे सकलजीवगोचरत्वविरहेण सुषुप्तिदशायामुपाधुरपशमासम्भवात् त्वदुक्तदिशोपदर्शिते मोक्षेऽपि तथात्वस्यैवौचित्यात्। न चैवमप्येकात्मप्रत्ययसारमित्यस्य नैयायिकसम्मतमुक्तावसङ्गतिः, तदानीं ज्ञान सामान्यविरहादिति वाच्यं एक आत्मैव प्रत्ययसारः अस्तित्व प्रतीतिविषयो यत्रेति व्युत्पत्तेः शून्यत्वप्रतिषेधतात्पर्य्यकत्वेन सुसङ्गतत्वात्। अनिर्णीततात्पर्य्यकेण विवादास्पदश्रौत वाक्येन प्रत्यक्षादिबाधानौचित्याददैतपक्षप्रसाधनं न घटतइति तु परमार्थः। तस्मात् प्रणवपादादिभेदोक्त्या द्वैतपक्ष एव माण्डुक्योपनिषदभ्युपगतः।

अथ तैत्तिरीयोपनिषदां तात्पर्य्यमुच्यते।—श्रवणमनन निदिध्यासनपरिपाकजन्मा परमात्मसाक्षात्कार इति सिद्धान्तः। तत्र निदिध्यासनमनेकविधमधिकारिवैचित्र्यात्। निदिध्यासननिष्ठाविशेषो भक्तियोगः। तत्र श्रवणं चित्तशुद्धिश्च मुख्योपायः। मननं निदिध्यासनान्तरञ्च तदङ्गतया कैश्चिदपेक्षिते अपि न साधारणकारणकुक्षावन्तर्भवत इति ते परित्यज्य श्रवणचित्तशुद्धिविधानाय प्रथमा वल्ली। द्वितीय वल्ल्याञ्च परमात्मनः सर्व्वस्रष्टृत्वकथनं यच्छ्रुत्वा भक्तिरुदेष्यतीति।

नन्वत्राकाशस्यापि सृष्टिरुक्ता सा तु श्रीमद्भिर्नाङ्गीक्रियत इति चेत् सत्यम् आकाशसृष्टेराकाशाभिव्यञ्जनमात्ररूपत्वात्। अभिव्यञ्जनञ्च शब्दसृष्टिद्वारकमन्तरेण शब्दमाकाशज्ञानस्यासम्भवात्। नन्वेवं श्रुतेर्गौणार्थकत्वकल्पनापत्तिरितिचेत् मैवं मुख्यार्थपरयोरन्योन्यविरुद्धयोः श्रुत्योरन्यतरत्र गौणार्थकत्वकल्पनायाः सर्व्वसम्मतत्वात्। नचाकाशस्योत्पत्तिश्रुतिरेव वर्त्तते न तु तद्विरुद्धश्रुतिरितिवाच्यं—आकाशवत् सर्व्वगतश्च नित्य इति श्रुतेरेव विरुद्धत्वात्। अथात्र श्रुतौ सर्व्वगतत्वांशएव तदुपमानमिति चेन्न तुल्यायामाकाङ्क्षायामेकशेषस्य कर्त्तुमशक्यत्वादनित्ये सर्व्वगतत्वासम्भवाच्च। नचात्रापेक्षिकसर्व्वगतत्वनित्यत्वे गृह्यते इति युक्तं निरङ्कुशसर्व्वगतनित्यशब्दाभ्यामापेक्षिकत्वाप्रतीतेः। उपमेयापेक्षया येन धर्म्मेणोपमानस्यापकर्षः तमादायोपमितौ विपरीतमतिकारित्वप्रसङ्गाच्च। नहि जलमिव मधुरं क्षीरमिति प्रयुक्तौ क्षीरस्य माधुर्य्यातिशयो गम्यते, गम्यते तु माधुर्य्यविरहः। नच लोकव्यवहारानुवादादियमुपमोक्तिरिति युक्तं चन्द्रसूर्य्यतारकादिसञ्चरणस्थानस्यैवाकाशत्वेन लोकैर्व्यवह्रियमाणत्वात्। अतएव नीलमाकाशमित्युच्यते। नच तस्य सर्व्वगतत्वं सम्भवति। अवकाशात्मनोऽपि कूपाद्यन्तर्गतत्वव्यवहारविरहाच्च। नैयायिकव्यवहारानुवादादेवमिति चेन्नैयायिकव्यवहारस्य तर्कादिप्रयुक्तस्य श्रुतिपरिगृहीतत्वाभ्युपमे त्वाकाशनित्यत्वसिद्धेरप्रत्याख्येयत्वात् अपिच—योऽय-

माकाशस्य सम्भव उक्तः तस्योपव्याख्यानमग्रे श्रूयते "असद्वा इदमग्रआसीत् ततो वै सदजायत तदात्मानं स्वयमकुरुतेति"। इदं जगत् असद् वै आसीत्; अनभिव्यक्त कार्य्यत्वेनासत्कल्पं यद्ब्रह्म तत्तुल्यमासीत्। आयुर्घृतमितिवत् हेतुहेतुमतोरभेदोपचारात् तदेवासीदिति वा। तत एवासत्कल्पाद् ब्रह्मणः परमात्मनः सत् नित्यस्वरूपम् स्वयम् अजायत अभिव्यक्तं वभूव कार्य्याभिव्यक्त्येति भावः। तदेतद्विवृणोति—तदात्मानं स्वयमकुरुतेति। अस्मिन्नर्थे यथा सदजायतेत्यनेन असत्कल्पस्य सतः कार्य्याभिव्यक्त्याभिव्यक्तिरुपदिश्यते, तथैव नित्यस्याप्याकाशस्य कार्य्याभावेनासत् कल्पस्य कार्य्याभिव्यक्त्याभिव्यक्तिरेव सम्भूत इत्यनेनाभिहिता। विशेषस्तु ब्रह्मणः स्वयमभिव्यक्तिः, आकाशस्य च परमात्मकर्त्तृकशब्दसृष्ट्या परमात्ममूलकाभिव्यक्तिरिति अन्यथा "असन्नेव स भवति असद् ब्रह्मेति वेद चेत्" इति श्रुतेरनन्तरं "असद् वा इदमग्र आसीत्" इत्याम्नान मसङ्गतं निरर्थकञ्च स्यात्। अस्मन्मते च नित्यस्य कार्य्याभिव्यक्त्याभिव्यक्तिरपि जन्मार्थकधातोरर्थ इत्येतदुपपादयितु मिदमाम्नातमिति नासङ्गतिर्नवा वैयर्थ्यम्। ननूक्तश्रुतेर्नायमर्थः किन्त्विदं जगत् अव्याकृतत्वेनासत्कल्पमासीत् ततः असत्कल्पाद् ब्रह्मणो जगदजायतेति सङ्कल्पेन जगदुपादानात्। जगद्वाचकमिदमित्यनुकृष्य सदजायत सत्स्वरूपेण परिणतमिति वार्थ इति मैवं स्वाभ्युपगम

विरोधात्। तथाहि प्रथमकल्पे ब्रह्मैव श्रुतौ सर्व्वत्र सदित्युच्यते असच्च जगत्, अन्यत् सर्व्वमार्त्तमिति श्रुतेरिति श्रीमतामभ्युपगमः। अथात्र यद्यकस्मात् सच्छब्देन जगदुच्येत सोऽयं स्वाभ्युपगमो विरुध्येत। यदि तु कारणस्य ब्रह्मणः सत्त्वमादाय सदित्युच्येत अजायतेत्यस्यानुपपत्तिः स्यात् नहि कारणात्मना सतो जन्म सम्भवति आद्यच्चणसम्बन्धरूपत्वात्तस्य। अथाभिव्यक्तिरायातं मार्गेण। द्वितीयकल्पे च सत्स्वरूपेणावस्थितस्यासदात्मना परिणतिरेव कार्य्यावस्था, परिणतिश्चात्र विवर्त्तरूपा अन्यथा ब्रह्मणः परिणामित्वप्रसङ्गेन स्वाभ्युपगमविरोधः, यतो विवर्त्तस्यासत्त्वं रज्जुसर्पादौ प्रसिद्धं स्वाभ्युपगतञ्च तदपहाय सत्स्वरूपेण परिणतमित्युक्ति विरुध्यते तदेवमुभयत्र स्वाभ्युपगमविरोधः प्रसज्यते। आकाशादिसर्व्वस्रष्टृत्वेन परमात्म ज्ञानस्य भ्रमरूपस्यापि भक्तिविशेषफलकत्वात् तदर्थं सर्व्वात्मकत्वेन ब्रह्मध्यानार्थं जगदुपादानत्ववचनवत् तदुक्तेरपि सम्भवेन, गौणार्थकत्वाकल्पनेऽपि च्चतिविरहाच्च। अतएवारोपितया आनन्दस्वरूपतया रसस्वरूतया वा ध्यानात् परमात्मनि भक्तिविशेष उदेतीति तादृप्येणोक्तिरुपपद्यते। भक्तिश्च बहुधा तत्र भक्तिनिष्ठा तु मातरीव स्तनन्धयस्य, तदियमेवाभयप्रतिष्ठेत्युच्यते, यथाहि स्तनन्धयो मातृक्रोड़प्रतिष्ठितोऽभयो भवति तद्वदसौ भक्तिनिष्ठः। परिनिष्ठितभक्तोनां जीवन्मुक्तिपरममुक्ती भवतः। तदेतत् सूचयति "यदाह्येवैष एतस्मिन्नदृश्येऽना-

त्मेऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" इति। अभयं मुक्तिः। "अभयं वै जनक प्राप्तोऽसीति" श्रुत्यन्तरात्। ये तु परमात्मनि भक्तिमापन्ना अपि व्यवधानं कुर्व्वन्ति राजनीव प्रजाः, ब्रह्मज्ञानवतामपि तेषां न जीवन्मुक्तिः भयस्य विद्यमानत्वात्। यथेन्द्रादीनां। श्रूयते हि तलवकारोपनिषत्सु ब्रह्मज्ञत्वमिन्द्रादीनां कठोपनिषत्सु च मृत्योः, तेषामपि भयमिहाभिधीयते, तथाहि "यदाह्येवैष उ दरमन्तरं कुरुते अथ तस्य भयं भवती" त्युपक्रम्य "भीषास्माद् वातः पवते भीषोदेति सूर्य्यः। भीषास्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चम इति"। उ इति अव्ययम्। दरम् अल्पम्। अल्पमपीत्यर्थः। अन्तरं व्यवधानम्। भीषा भयेन। इति विषमपदार्थः। विशेषस्त्वेतावान् यदविज्ञातब्रह्मतत्त्वानां सम्यग् व्यवहितचेतसां सर्व्वत एव भयं विदुषस्तु केवलं ब्रह्मणः, तदाम्नातं "तत्त्वेव भयं विदुषो मन्वानस्य"इति। साक्षात्कृतब्रह्मणामपि भक्तिनिष्ठारहितानां क्रममुक्तिरिति भक्तिस्तुतिर्व्वा भक्तिलक्षणं वेत्यन्यदेतत्। तथाच

"सत्यं ज्ञानमनन्तं ब्रह्म
यो वेद निहितं गुहायां परमे व्योमन्।
सोऽश्नुते सर्व्वान् कामान्
सह ब्रह्मणा विपश्चिता।" इति

अत्र हिरण्यगर्भलोकावाप्तिः फलं श्रूयते। अतएव श्रीमद् गीतायां "एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते। ये

चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः।” इत्यर्ज्जुनप्रश्ने श्रीभगवद्वाक्यम् “मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः। ये त्वक्षरमनिर्द्देश्य मव्यक्तं पर्य्युपासते। सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम्। सन्नियम्येन्द्रियग्रामं सर्व्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः। क्लेशोऽधिकतरस्तेषामव्यक्तासक्त चेतसाम्। अव्यक्ता हि गति र्दुःखं देहवद्भिरवाप्यते।” इति भक्तेः प्राधान्यं स्पष्टमुपपादितम्। अर्थान्तरन्तु कष्टकल्पित-त्वादनुपादेयमेव। एतावता तैत्तिरीयोपनिषद्भिर्द्वैतमेव तत्त्वतः प्रतिपादितम्, यतः श्रुत्यैव भगवत्या ब्रह्मज्ञत्वेन प्रख्या-पितानामिन्द्रादीनामपि भयमाम्नातम्। यद्येकमेव तत्त्वं तद्विज्ञातॄणां कुतो भयप्रसक्तिः द्वितीयाभावात् द्वितीया द्वै भयं भवतीति हि श्रूयते। ननु यदि द्वैतत्त्वं द्वितीयाद्वै भयं भवतीति श्रुतेरुपक्रमोपसंहारौ बाध्येताम्। कथमिति चेत् आत्मन एकाकित्वात् प्रथमं भीतिसञ्चार इत्युपक्रमस्य, कुतो मे भीतिरद्वितीयस्येत्यात्मैकत्वविचारानन्तरं भयापगम इत्युप संहारस्य च द्वैतवास्तवत्वे आत्मैक्यविरहेण बाधप्रसक्ति-रिति नैवं सर्व्वज्ञस्य सर्व्वशक्तेर्ब्रह्मणो भयासम्भवेन तत्सन्दर्भस्य सङ्कल्पत्यागविधिपर्य्यवसाय्यर्थवादरूपत्वात्। भक्ति-निष्ठाविरहितानामात्मैक्यज्ञाननिष्ठानां न जीवन्मुक्तिरिति स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवं वित् अस्माल्लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रामतीत्यादौ

श्रयते। अस्मात् लोकात् प्रेत्येति स्पष्टमाम्नानात्। जीवन्मुक्तानां प्रायणासम्भवात्।

तृतीयवल्ल्याम्मानन्दो ब्रह्मेति व्यजानादित्यन्ताख्यायिकायाम् आनन्दमयकोशपर्यन्तस्य ब्रह्मरूपतया ज्ञानं तपसः साक्षात् फलम्, नतु ब्रह्मस्वरूपसाक्षात्कारः स हि मणिप्रभायां मणि-बुद्ध्या धावतो नातिदूरस्थमणिलाभवत् आनन्दमयकोशान्तं विजानतो योगजसन्निकर्षाद् भवतीति प्रतिपादितम्। परिशेष-ग्रन्थनिष्कर्षस्तु भगवद्भक्तिविरहितस्य तपोनिष्ठयातिथि-सेवादिकर्मणा च परम्परया सम्पादितब्रह्मसाक्षात्कारस्यापि न जीवन्मुक्तिरपितु क्रममुक्तिरिति भूयोऽपि तदुक्त मस्माल्लोकात् प्रेत्येत्यादिना। ब्रह्मसाक्षात्कारप्रयोजक विशेषाभिधानादपौनरुक्त्यम्। भक्तिनिष्ठाया जीवन्मुक्तिहेतुत्व-प्रत्ययदार्ढ्यायानुवादो वायम्।

अत्र "आनन्दं ब्रह्मण" इति षष्ठीनिर्देशात् "आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा" इति आनन्दब्रह्मणोः पृथक् स्वरूपत्वेनाभिधानात् ब्रह्मज्ञानवतामपीन्द्रादीनां भयकथनाच्च द्वैततत्त्वमिति सर्व्वतः पर्य्यवसन्नम्।

ननु "स च त्यच्चाभवत्" इति "आनन्दो ब्रह्म" इति "स यश्चायं पुरुषे यश्चादित्ये स एकः" इति चानन्दस्वरूपात्माद्वैत-मेव प्रतिपादितमिति चेन्नैष दोषः "स च त्यच्चाभवत् इत्यादि श्रुतीनां"सर्व्वं खल्विदं ब्रह्म"तिवदभेदोपासनार्थत्वात्। अभेदो पासनस्य तपोविशेषत्वबोधनाय च तदुपन्यासात्। "आनन्दो

ब्रह्म" इत्यत्र आनन्दशब्दस्य आनन्दमय कोशपरत्वात्, अब्रह्म-ण्यपि तस्मिन् ब्रह्मत्वस्यान्नादौ ब्रह्मत्वस्येव समर्थनीयत्वात्। अन्यथा "आनन्दो ब्रह्मेति व्यजानात्" इत्यस्य "प्रतितिष्ठति अन्नवान् अन्नादो भवति महान् भवति प्रजया" इत्याद्यल्प फलकत्वाभिधानं विरुध्येत, किञ्च "आनन्दमयमात्मानमुपसं-क्रामति" इति "आनन्दमयमात्मानमुपसंक्रम्य" इति च श्रुति-रुपहतार्था स्यात् उपसंक्रमेः कर्त्तृकर्म्मणोर्भेदनियमात्। यदि तत्रानन्दमयकोश एव गृह्यते आनन्दश्च ब्रह्मेति तथापि प्रकृतहानाप्रकृतक्रियाप्रसङ्गस्तृतीयवल्ल्या दुर्निवारः। आनन्द-मयकोशस्य तत्राप्रक्रान्तत्वात्। न च "सैषा वारुणी भार्गवी-विद्या परमे व्योमन् प्रतिष्ठिता" इति श्रुतिर्नोपपद्यते परम-व्योमपदार्थस्य ब्रह्मणोऽत्राप्रतिपादितत्वादिति वाच्यम् तपसानन्दमयकोशपर्य्यन्तपरिज्ञाने ब्रह्मसाक्षात्कारो योगज सन्निकर्षात् सुघट इति वरुणोक्तभार्गवविद्याया ब्रह्मसाक्षात्कार-फलकतया ब्रह्मप्रतिष्ठितत्वाभिधानस्य निर्ब्बाधत्वात्। "यश्चादित्ये स एकः" इति श्रुतेश्च परमात्मनः सर्व्वमूर्त्तसंयोगित्व ज्ञापनार्थत्वात् अन्यथा आदित्य इति पुरुष इति च सप्तमी निर्द्देशो व्याहन्येत। अद्वैतार्थकत्वे प्रागुपदर्शितपूर्व्वापर विरोधाच्च। न च नैयायिकमते कोशपञ्चकमनुपपन्नमिति वाच्यं वक्ष्यमाणरूपेण तदुपपादनात् तथाहि स्थूलदेहस्यान्न-मयकोशत्वं यदभिमानेन स्थूलोऽहं कृशोऽहमिति बुद्धिर्भवति इन्द्रियसमूहः प्राणमयकोशः यदभिमानेन काणोऽहं

वधिरोऽहमिति बुद्धिरुदेति मन एव मनोमयकोशः यदभिमानेन स्वपिमीति धीरुत्पद्यते विज्ञानमेव विज्ञानमयकोशः येन जाग्रत्स्वप्नावस्थे गम्येते आनन्दमयकोशश्च अदृष्टसहितदुःखाभावसुखान्यतररूपः। येन जाग्रदादिकालीनसुखावस्थासुषुप्तिसमाधयो गम्यन्त इति। नचैवं विज्ञानमयकोशो मनोमयकोशेऽन्त र्भवतीति वाच्यं स्वरूपभेदेन फलभेदेन च भेदात्, नहि विज्ञानं मनश्चैकपदार्थः नापि विज्ञानमनोमयकोशयोः फलसाम्यम्, सत्यपि मनसि विज्ञानाभावे कृत्यादीनामनुत्पत्त्या विज्ञानस्यैव कृत्यादिकमिति व्यवहारो विज्ञानात्मधियः फलम् इदमेव "विज्ञानं यज्ञं तनुत" इत्यत्र श्रूयते। तदेवं लोकानुभवाद् विज्ञानं ब्रह्मेति श्रुतिरबाधितैव। मनोमयकोशात्मधियस्तु स्वपिमीति व्यवहारः। एवमेवानन्दो ब्रह्मेति प्रजननानन्दात् प्रजोत्पत्तेरनुभूयमानत्वात्। अत्र ब्रह्मपदमात्मपरम्। इदञ्च कोशपञ्चकं जीवात्मन एव परमात्मनस्तु सर्व्वभूतानि विष्टभ्य स्थितत्वात् ब्रह्मपुच्छं प्रतिष्ठेत्यत्र ब्रह्मपदेन परमात्मैवोक्तः। जीवस्य कोशपञ्चकोपसंक्रान्तिस्तत्तत्स्वरूपग्रहः ततश्च कोशचतुष्टयोपसंक्रमानन्तरमानन्दमयकोशोपसंक्रमे समाधिः पर्य्यवस्यति। तस्मात् कोशपञ्चकस्य न नैयायिकमतविरुद्धत्वमित्येवं तैत्तिरीयकश्रुतिर्नार्हितं प्रतिपादयतीति।

ऐतरेयोपनिषत्सु प्रथमेऽध्याये सृष्टिकर्त्तृत्वेन परमात्मनिरूपणम्, द्वितीये जीवात्मनः शरीरसम्बन्धः, तृतीये जीवात्मनिरूपणम्, तस्यैवेह परलोकभोगोमुक्तिश्चेति प्रतिपादितम्।

तत्रोपक्रमवाक्यम् "आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चनमिषदिति" मिषदित्यस्य सेचकमित्यर्थः। रेतःसिचः प्रजाः सृजन्तीति प्रसिद्धं लोके। तदभावेऽपि लोकान् स्रष्टुरहो प्रभावातिशय इत्याविदनाय "नान्यत् किञ्चन मिषत्" इति। ननु स एव जीवात्मा, "कतरः स आत्मा येन पश्यति येन शृणोती"त्युपक्रम्य "एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्व्वे देवा इमानि च पञ्च महाभूतानीति" क्रमेणाद्वैतप्रतिपादनादिति चेन्न "सोऽस्यायमात्मा पुण्येभ्यः कर्म्मभ्यः प्रतिविधीयतेऽथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्ज्जायते।" इति जीवभेदस्योक्तेः, वामदेवमोक्षाभिधानाच्च। ननु बुद्बुदवीचिन्यायेन भवतु जीवभेदस्तथापि नाद्वैतक्षतिः, बुद्बुदवीचीनां समुद्रादनन्यत्ववत् जीवानां ब्रह्मणोऽनन्यत्वादिति चेन्नैवं यतः "कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा" इत्यत्र द्वौ प्रश्नौ श्रूयेते तयोरेकः स्वात्मव्यक्तिविषयः कोऽयमितीदमा निर्द्देशात् अन्यश्च जातिविषयः कतर इति निर्द्देशात्, नच्चाद्वैतपक्षे प्रश्नद्वयं घटते एकस्यैव वास्तवत्वात् जातिविरहाच्च। तयोराद्यप्रश्नस्योत्तरं येन पश्यतीत्यादिना। "संज्ञानमाज्ञान-" मित्युपक्रम्य चान्त्यप्रश्नस्योत्तरम्, चेतनसामान्यमिति तस्य फलितार्थः। ज्ञानाश्रयत्वं प्रज्ञानपदवोध्यात्मत्वसामान्यं वा तदनुगमकम्। पञ्च महाभूतानीति तदभिमानिदेवतापरम्। "एष ब्रह्मैष इन्द्र" इत्यादौ "यत् किञ्चेदं प्राणि जङ्गमं च पतत्त्रि च यच्च स्थावरम्" इत्यन्ते च जीवनिर्द्देशात्। वीजानामप्यस्ति

जीवसम्बन्धः। एतत् सर्व्वं चेतनमिति सामान्यज्ञानायेदम्। यद्यद्वैतपरं स्यात् "यत् किञ्चेदं प्राणि जङ्गमं च पतत्त्रि चे"त्यत्र प्राणीति व्यर्थं स्यात्। वामदेवस्य 'एतेन' प्रागुक्तात्मसामान्यान्तर्गतेन 'प्रज्ञेन' मनःसहितेन जीवात्मना "अस्माल्लोकादुत्क्रम्य" दिव्यशरीरेण पर्य्यवसितकामभोगो मनःसम्बन्धरहितो मुक्तोऽभवदिति "स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्व्वान् कामानाप्त्वामृतः समभवत्" इत्युपसंहारवाक्यस्यार्थः पर्य्यवसन्नः। मनोविशिष्टजीवात्मन एव प्रज्ञत्वोत्क्रमणयोः सम्भवात् मनःसम्बन्धविरहे च भोगसमाप्तेरावश्यकत्वात्। परमात्मसाक्षात्कारो जीवात्मसाक्षात्कारश्च मुक्तावुपयुज्यत इत्याशयः। तस्मान्नाद्वैतमैतरेयश्रुत्यर्थः।

अथ श्वेताश्वतरोपनिषदामर्थः तस्य द्वैतमुखेन मोक्षोपायप्रतिपादनं संक्षेपः। कार्य्यतत्त्वं, कारणतत्त्वं, तद्विशेषः, परमात्मतत्त्वं, जीवात्मतत्त्वं, तत साक्षात्कारस्य फलम् उपायो योगश्चेति प्रपञ्चो मूलादवगन्तव्यः परन्तु प्रसङ्गागतं मूलमत्र किञ्चिदालोचयामः। तथाह्यत्र कार्य्यसामान्ये कालोऽदृष्टमीश्वर स्तदिच्छा च वहिरिन्द्रियग्राह्यभावकार्य्यसामान्ये भूतानि द्व्यणुकादिषु कार्य्यद्रव्येषु भूतविशेषान्तर्गतास्तत्तत्परमाणवः सुखदुःखादौ च जीवात्मा कारणत्वेनाम्नायते। "काल स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतो" रिति हि तदीयो मन्त्रः।

परमात्मनो जीवात्मा भिद्यते, परमात्मा ह्यीश्वरः प्रेरयिता प्रेर्य्यश्च जीवः। देहादिभिन्नत्वेन जीवात्मस्वरूपसाक्षात्कारान्मुक्तिः यदि तयोरैक्यमध्यस्योपासना क्रियते तथाप्युन्नतभूमौ प्रमात्मकस्वरूपसाक्षात्कारो भवत्येवेति नैयायिक सिद्धान्ते मूलं—

"सर्व्वाजीवे सर्व्वसंस्थे वृहन्ते
तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे।
पृथगात्मानं प्रेरितारञ्च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति।" इति मन्त्रः।

हंसो जीवात्मा वृहति ब्रह्मचक्रे भगवतः संसारचक्रे भ्राम्यते, स हि आत्मानं स्वं (प्रेर्य्यं) प्रेरयितारम् (ईश्वरम्) च पृथक् मत्वा स्थितः तेन (प्रेरयित्रा) जुष्टः सख्या सखेव सेवितः अपनोदितदुःखहेतुरितियावत् अमृतत्वं मोक्षम् एतीति तदर्थः।

मुमुक्षुभिः सर्व्वस्रष्टा सर्व्वशक्तिः परमेश्वरः समाश्रयणीय इति—

"यो ब्रह्माणं विदधाति पूर्व्वं
यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्व्वै शरणमहं प्रपद्ये।"

इत्यत्रचान्यत्र चोक्तम्। ननु जीवात्मा परमात्मा चेत्यात्मद्वैविध्यम्, यः खलु परमात्मा स एव ईश्वर इति

ब्रह्मेति च व्यपदिश्यत इत्युक्तम्, न तु तदन्यः कश्चिदात्माऽभ्युपगम्यते यस्य ब्रह्मसंज्ञा स्यात्। तथाच—

"ज्ञाज्ञौ द्वावजावीशानीशा-
वजा ह्येका भोक्तृभोग्यार्थयुक्ता।
अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता
त्रयं यदा विन्दते ब्रह्ममेतत्।"

इति मन्त्रेण विरोध इति चेन्न एतन्मन्त्रस्य नैयायिकमतसाधकत्वात् तदर्थो हि 'द्वावजौ नित्यौ' 'ज्ञः' सर्वज्ञः 'अज्ञः' किञ्चिज्ज्ञश्चाहमज्ञ इत्यनुभवात्। तयोर्ज्ञ 'ईशः' किञ्चिज्ज्ञश्च 'अनीशः'। एतेन परमात्मा जीवात्मा चेति द्वयमायातम्। 'एका अजा' बुद्धिर्मन इति यावत् बुद्धिशब्दस्य "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ"इति सूत्रादौ मनस्यपि प्रयोगात् 'भोक्तुः' जीवस्य 'भोग्यार्थेषु युक्ता' वहिरिन्द्रियद्वारा पारम्पर्य्येण सम्बद्धा। एतेन मनोवहिरिन्द्रियभूतेभ्यो जीवात्मनो भेदो दर्शितः। अनादिसंसारचक्रेऽसंख्य प्राणिशरीरं ग्राहंग्राहं त्यायंत्यायञ्च यद्यपि 'विश्वरूपः' तथापि स्वयम् 'अनन्तः' विनाशरहितः 'आत्मा' जीवात्मा 'यदा' स्वम् ईशं भोग्यार्थयुक्तं मनश्चेति 'त्रयं' 'विन्दते' समाधिना लभते योगजसन्निकर्षेण प्रत्येकं पृथक् पश्यतीति यावत् यद्वा अजा अनादि-प्रवाहा नियतिः, परमात्मा स्वात्मा चेति त्रयं विन्दते लभते। नियतिलाभोऽदृष्टविशेषसञ्चारः, परमात्मलाभः परमात्मसाक्षात्कारः, स्वात्मलाभस्तत्साक्षात्कारश्चेति समानमन्यत्।—तदा 'अकर्त्ता' रागादिदोषविरहेण

प्रवृत्तिशून्यः भवतीति शेषः। 'एतत्' प्रवृत्तिशून्यत्वं ब्रह्मं ब्रह्म अप्रगृह्यस्याणोऽनुनासिकादेशात् भावप्रधाननिर्द्देशेन च ब्रह्मत्वं परमात्मभावः अपवर्ग इति फलितम्। अथवा त्वयं यत् आविन्दति सम्यक् लभते योगजसन्निकर्षेण पृथक् पश्यति तत् पृथगदर्शनं 'मे' मत्सम्मतं ब्रह्म ब्रह्मसाम्यप्राप्तिहेतुत्वात् आयुर्घृतमितिवत्। शरणमहं प्रपद्ये इत्यत्राहंपदस्येवात्र मे इति प्रयोगे बाधाभावात्। तथाच न्यायसूत्रम् "दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति। त्वयं विन्दत इत्युक्त्या मिथ्याज्ञानापायद्वारा दोषापाय फलकात् तत्त्वज्ञानादनन्तरमकर्त्तृत्वं प्रवृत्त्यपायापररूपं जन्मापायद्वारा दुःखापायफलकत्वेनापवर्ग एव कल्पपरपर्य्यायायाः प्रवृत्तेः कार्य्यकारणभेदेन द्वैरूप्यस्योक्तत्वादिति ध्येयम्। नचैवमपि "तदेवाग्निस्तदादित्यस्तद वायुस्तदु चन्द्रमाः। तदेव शुक्रं तद्ब्रह्म तदापस्तत् प्रजापतिः। त्वं स्त्री त्वंपुमानसी" त्यादयो मन्त्राः ब्रह्मणः सर्व्वात्मकत्वमामनन्ति। तच्च विरुध्यते द्वैतसिद्धान्तेनेति वाच्यम्, तेषां मन्त्राणामुपासनार्थ-त्वेनाविरोधात् एकत्वदृश्योपासनायाः प्रतिपादितपूर्व्वत्वात्। तत्रवास्तवत्वभ्रमोमाभूदित्येतदर्थं तदनन्तरं "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति "द्वा सुपर्णा" इति "जुष्टं यदा पश्यत्यन्यमीश" मिति च मन्त्रैर्भेदनिर्द्देशः सूपपद्यते। अनुपपत्तिस्तु न शारीर इत्यादि सूत्रे भगवद्वेदव्यासमहर्षिभिरपि जीवपरमात्मनोर्भेद एव

प्रतिपादितः। नच परमात्मनि बालकल्पितशरीरभिन्नत्वमत्र प्रतिपिपादयिषितम्, वैयर्थ्यात्। शब्दविशेषादिति-सूत्र-सूचिताया भाष्य-परिगृहीतायाः "एवमयमन्तरात्मन् पुरुषो हिरण्मयः" इति श्रुतेरनर्थोपदेशित्वापाताच्च। नहि बालकल्पनानुवादेन युज्यते सर्व्वज्ञायाः श्रुतेरनर्थोपदेशः। द्वैतदृष्टेरनर्थहेतुतायास्तैरभ्युपगमात्। तस्माद्द्वैतमेव श्रौतं तथ्यम्। अतथ्यमप्यद्वैतमुपासनाविशेषाय श्रुतिषु क्वचित् तथ्यवदुक्तम्। नच तावतानर्थोपदेशित्वं श्रुतेर्घटते, यतः, श्रुतिः किल जननीव पुत्राधिकारविशेषमनुवर्त्तमाना तथोपदिशति यथा सर्व्व एव सर्व्वानर्थपरिहाराय शक्नुयादिति। तथाहि कांश्चिदधिकारिणस्तथ्यभूतं द्वैतमेवापवर्गाय ग्राहयति कांश्चिच्चातथ्यभूतमद्वैतमुपासनाविशेषाय, यच्चरमफलमपवर्ग एवेति न कस्यचित् किञ्चिदनर्थापातशङ्केति सिद्धम्।२।

इति श्रीगौतमसिद्धकुलोद्भव-
नानादर्शनपरमाचार्य्य-श्रीमत्-पञ्चानन-तर्करत्न-भट्टाचार्य्य-
निर्म्मितायां द्वैतोक्तिरत्नमालायां समन्वयाख्या
प्रथमा यष्टिः।

---

## द्वितीयायष्टिः।

नैयायिका हि न्यायमताविरुद्धं वैशेषिकसिद्धान्तं स्वसिद्धान्तमेव मन्यन्ते ततो हेतोर्वैशेषिकसिद्धान्तखण्डनपरशारीरकभाष्याक्षेपपरीहारार्थेयं द्वितीया यष्टिरारभ्यते।

यत्खलु परमाणूपादानकं भूतचतुष्टयं तदेवाकाशादिनित्य द्रव्यसहितं जगदुच्यत इति नैयायिकमतम्। अखिलं जगद् ब्रह्मोपादनकमित्यद्वैतिनः। तथासति कारणगुणस्य कार्य्यगुणारम्भकत्वेन जगतश्चेतनत्वापत्तिरिति वैशेषिकपक्षकृताक्षेपे परमाणुपरिमाणादद्व्यणुकपरिमाणाद्यनारम्भकत्ववत् ब्रह्मचैतन्यस्यापि जगति चैतन्यानारम्भकत्वमित्यद्वैतिनामुत्तराभासः। तथाहि तदर्थं तया व्याख्यातं सूत्रम्, "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इति। तत्रोच्यते—

कार्य्यकारणयोरस्ति साजात्यं श्रुति-सम्मतम्।
फलेन तत्तु निर्णेयं प्रतिवन्धिनिवर्त्तकम्।१।

"एकेन मृत्पिण्डेन सर्व्वं मृन्मयं विज्ञातं भवती"त्यादि श्रुतिभिः कार्य्यकारणयोः साजात्यमुपदर्शितम्। तत्र यदि विजातीयव्यवच्छेदककारणधर्म्मो न कार्य्याश्रितः स्यात् साजात्यमेव न स्यात्, न च न तेषां साजात्यं किन्त्वैक्यमिति युक्तम्, साजात्यविरहे नानावस्तूनामैक्यस्य सम्भावयितुमयोग्यत्वात्। नच येन केनापि धर्म्मेण साजात्यं सम्पाद्यमिति वाच्यं तमःप्रकाशयोरपि साजात्यप्रसङ्गात् पदार्थत्वाविशेषात्। अतः

कारणवृत्तयो विजातीयव्यवच्छेदका गुणास्ते साक्षात् कार्य्य-द्रव्यमसंस्पृशन्तोऽपि तत्र स्वसजातीयं गुणान्तरमारभमाणाः कारणद्रव्यसाजात्यं निर्वर्त्तयन्तीत्युपगम्यते। तथाप्रत्यक्षादिभ्यश्च। गुणगुणिनोर्वास्तवभेदाच्चोत्पत्तिव्यतिक्रमः। नहि रूपं घटो रसो दुग्धमिति च भवति कस्यचित् प्रत्ययः। नचास्ति तावत् शुक्लः पटो रक्तः पट इत्यभेदप्रत्यय इति वाच्यं तत्र शुक्लादि शब्दस्य तद्वति निरूढ़लक्षणया मत्वर्थीयाच्प्रत्ययान्तत्वेन वा तथाप्रत्ययोपपत्तेः। गुणे शुक्लादयः पुंसि गुणिलिङ्गाश्च तद्वतीति हि कोषकृतः। एवञ्च कारणसाजात्यबुद्धिनिमित्ती-भूतानां कार्य्यसमवेतगुणानां पृथगुत्पत्तिकानामुत्पादक-विचारे तथाविधाः कारणगुणाः प्रथमं बुद्धिपथमधिरोहन्ति। ते च नियतत्वादप्रत्याख्येयाः। ततश्च लाघवेन कार्य्यगुणसामान्यं प्रति तत्सजातीयकारणगुणानां विजातीयाव्यवच्छेदकाना-मपि कारणत्वमसतिवाधके कल्प्यते। वाधावाधौ चात्र फलवल-कल्प्यौ। तेन विजातीयाव्यवच्छेदकानां परमाण्वादि परिमाणानां दृष्टवाधादकारणत्वं विजातीयव्यवच्छेदकानान्तु परमाण्वादिगन्धादीनां द्व्यणुकादिगन्धादौ कारणत्वं कथमप्य-नपवदनीयं नैयत्यादतः प्रतिवन्धिनिवृत्तिः। परमाण्वादि-परिमाणानां विजातीयाव्यवच्छेदकतया वैषम्येण प्रतिवन्धित्वा-सम्भवादिति भावः। नच परिमाणमपि परमाणूनामपरिमण्डल-लक्षणविजातीयव्यवच्छेदकमिति वाच्यमितरव्यावर्त्तकविशेष-गुणैरेव कार्य्यकारणविचारे साजात्यवैजात्यनिरूपणस्य

श्रुतिभिरुपदर्शितत्वात् अन्यथा संयोगादिना मृत्साजात्येन, मृत्पिण्डज्ञानात् सर्व्वकार्य्यायसज्ञानसम्भवेन तस्य पृथगुपादानानौचित्यात्। नहि पारिमाण्डल्यादिकं विशेषगुणः येन तदभावादितरत्र श्रुतिवोधितं वैजात्यं सेत्स्यति। ब्रह्मणश्च चैतन्यमेव विशेषगुणः स एव विजातीयव्यवच्छेदकः तेन हि कार्य्यगुणा द्रागेवारम्भणीयाः। नारभ्यन्ते चेद्व्याहन्येत कार्य्यकारणयोः श्रौतं साजात्यम्। अथ चैतन्यं न ब्रह्मणो विशेषगुणः किन्तु स्वरूपमात्रमिति चेत् तथापि कार्य्येषु कारणानन्यत्वमभ्युपगच्छतां भवतां जगति चैतन्यस्वरूपत्वं सुतरामभ्युपगन्तव्यत्वमापद्यते न त्वनिर्व्वाच्यत्वं जाड्यं वा। अथ संयोगाद् विलक्षणानां द्रव्याणामुत्पत्तिदर्शनात् सजातीयोत्पत्तिव्यभिचार इति चेत् प्रष्टव्यास्तावदभिन्नात्मानः, किं दण्डवेमाद्यभिन्नत्वं घटपटादिषु श्रीमद्भिरभ्युपगम्यते, मृत्पिण्डतन्त्वाद्यनन्यत्वं वा? यद्याद्यः पक्षः, कृतं ब्रह्मोपादानकत्वाग्रहेण अनुपादानस्यापि कारणस्य कार्य्यानन्यत्वाभ्युपगमात्। यदि त्वन्त्यः, उपादानमात्रानन्यत्वं कार्य्यस्य पर्य्यवसीयते। केवलमत्रानन्यत्वं भवतामखण्डित्ववद्दुर्निरूपमस्माकन्तु सुनिरूपं साजात्यमित्येतद् विशिष्यते। तथाच संयोगस्यानुपादानत्वाद् यथा न तत्कार्य्यं द्रव्यानन्यत्वं भवद्भिरिष्यते, तथास्माभिरपि तत्कार्य्यद्रव्ये तत्साजात्यं नेष्यते, उपादानस्यैव सजातीयोत्पादकत्वनियमात् तथाच कुतः पुनराक्षिप्यते सजातीयोत्पत्तिव्यभिचार इति। कारणगतो हि सामान्यगुणः क्वचित् कार्य्यगतं

सजातीयगुणमनारभमाणोऽपि कारणगतविशेषगुणस्य कार्य्यगतस्वसजातीयविशेषगुणानारम्भणे न दृष्टान्तो भवितुमर्हति वैषम्यान्नापि विजातीयव्यावर्त्तकस्य कारणविशेषगुणस्य कार्य्यसाजात्यनिमित्तीभूततद्गतविशेषगुणानारम्भकत्वं सम्भवति कार्य्यकारणयोः साजात्यानुपपत्तेः तदनुपपत्तेरिष्टत्वे श्रौतसिद्धान्तभङ्गो दृष्टबाधश्चेति संक्षिप्तार्थः। अत्रानुमानप्रत्यनुमानप्रयोगाश्चेत्थं भवन्ति कारणगुणत्वं न कार्य्यं गुणारम्भकत्वव्याप्यं गुणवृत्तित्वात् पारिमाणत्ववत्, कार्य्यगुणारम्भकत्वं न कारणगुणत्वव्यापकं पारिमाण्डल्यावृत्तित्वात् घटपटादिवत्। ब्रह्मचैतन्यं न स्वाश्रयोपादानककार्य्यवृत्तिगुणारम्भकं किञ्चिदारम्भकं वा अनारम्भकस्वभावत्वात् पारिमाण्डल्यवदित्यादयस्तावद्द्वैतपक्षपातिनामनुमानप्रयोगाः। अत्र द्वैतवादिनां प्रत्यनुमानप्रयोगा यथा—द्रव्योपादानविशेषगुणत्वं कार्य्यविशेषगुणारम्भकत्वव्याप्यं विशेषगुणेतरावृत्तित्वात् तत्कपालरूपत्ववत्। आरम्भकत्वं द्रव्योपादान-विशेषगुणत्वव्यापकं सकलारम्भकवृत्तित्वात् वृत्तित्वे सत्यनारम्भकावृत्तित्वाद्वा प्रमेयत्वादिवत्। ब्रह्मचैतन्यं घटादिविशेषगुणारम्भकं घटाद्युपादानत्वाभिमतविशेषगुणत्वात् कपालरूपवत् इत्यादयः। अपि च द्वैतवादिनः परोक्तानुमानेष्वाद्ये द्रव्योपादानविशेषगुणत्वादिकमादाय व्यभिचारं द्वितीये आरम्भणासिद्धौ साध्यासिद्धिम् आरम्भणासिद्धौ च स्वरूपासिद्धिमुपदर्शयन्ति। तथा चारम्भणम् असमवायिकारणता, कारणतामात्रं वा आद्ये तावद्द्वैत-

वादिभिरसमवायिकारणतानभ्युपगमादारम्भणघटितसाध्यस्याप्रसिद्धिः अन्त्यपक्षे निमित्तकारणस्वरूपे ब्रह्मचैतन्ये अनारम्भकस्वभावत्वहेतोरभावात् स्वरूपासिद्धिरिति दिङ्मात्रमेतत्। एतेन चेतनाद्ब्रह्मणो विलक्षणमपि जगत् सत्त्वेनाविलक्षणमुत्पद्यते, नहि सर्व्वएव कारणधर्म्माः कार्य्यान्वयिनो भवन्तीति नियमः, पारिमाण्डल्यस्य द्व्यणुकादौ ह्रस्वत्वस्य घटादौ च निवृत्तिदर्शनात् यत्किञ्चिद्धर्म्मान्वयश्च सत्त्वेनैवेति प्रत्युक्तम्। कारणविशेषगुणस्य कार्य्यविशेषगुणारम्भकत्वनियमात् पारमार्थिकब्रह्मसत्त्वविलक्षणस्य व्यावहारिकसत्वस्य प्रातिभाषिकसत्त्वस्यानिर्व्वाच्यत्वरूपस्य वा जगति तत्स्वीकाराच्च। ननु स्यादेतत, तथापि ब्रह्मोपानकत्वं जगतो न विरुध्यते सर्व्वस्यैव जगतश्चेतनत्वाभ्युपगमात्, अथ कथं तदनुपलब्धिरिति चेदभिभूतत्वादिति चेत् मः यथा हि नैयायिकमते पार्थिवेन्द्रिये घ्राणेऽनुवर्त्तमानोऽपि गन्धो नोपलभ्यते तद्वत्। यन्त्रविशेषयोगाच्चोपलभ्यते वह्निः जडेषु चैतन्यमिति मैवं जीवात्मसम्बन्धादचेतनानां चेतनोपलब्धेः। तदसम्बद्धानामचेतनत्वस्य स्वाभाविकत्वमपह्नुत्य चेतनत्वस्याभिभूतत्वकल्पनायां मानाभावात्, घ्राणस्य पार्थिवत्वे सिद्धे पृथिवीत्वव्याप्यगन्धस्यापलपितुमशक्यत्वेनानुद्भूतत्वकल्पना सम्भवति, इह तु ब्रह्मण्युपादानत्वस्य विवादग्रस्तत्वेन प्रसह्य चैतन्याभिभूतिकल्पनाया अन्याय्यत्वात्। नन्वचेतनेषु जीवात्मसम्बन्धकल्पना भवतापि क्रियत इति चेत् न क्लृप्तत्वात्, साधनस्य कल्पनारूपतया

सिद्धे तदयोगात्, अचेतनेषु द्वेधा खलु जीवात्मसम्बन्धो भवति तदधिष्ठातृ-देवतात्मसम्बन्धस्तदनधिष्ठातृ-जीवात्मसम्बन्धश्चेति क्रमम्। श्रूयते हि तेजोऽधिष्ठातृदेवतादिकमाश्रित्य "तेज ऐच्चत" इत्यादि। स्मर्य्यते च गोरूपधरा पृथिवीति हिमालय-पर्व्वतस्य दुहिता च गौरीति। तदेवं तेजआदिषु जड़ेषु तद-धिष्ठातृदेवतासम्बन्धः प्रसिद्धः। द्वितीयोऽपि सम्बन्धः श्रूयते तथाहि "अथ य इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते" इत्यादिकं "तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते। यथैतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति तद्दह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते। अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति" इत्युक्तं छान्दोग्यब्राह्मणम्, अत्र पुनरावर्त्तमानो ह्याति वाहिकदेहस्थो जीवात्मा नरकानुभूतदुःखानामतिपातकिनां व्रीहियवादिस्थावरभावमुपगतानां तृणगुल्मादिलक्षणम-वयवविशेषमाश्रयते दृश्यादृश्यकीटादिवत् ततश्चासौ रेतः-सिगुपभुक्तव्रीहियवादिपरिणत्या रेतसा संसृज्यते ततश्च मातृगर्भं प्रविशतीत्यक्रम्। अयं हि प्रतिनिवर्त्तमानो जीवात्मा नाकाशादितिलमाषान्तानामधिष्ठाता किन्तु तत्र तत्र संबद्ध-इत्येवमन्यतरस्माज्जीवात्मसम्बन्धाद् जड़ेऽपि चेतनलक्षण मुपगम्यते, स्वदेह इव स्वात्मसम्बन्धान्मृत्तपइव वा निविड़-तृणगुल्मसम्बन्धादन्यथा चेतनस्यात्मनः परिणामापत्तिरशक्य-

परीहारा स्यात्। परिणामित्वाङ्गीकारे च स्थितं प्रकृत्यैव गतञ्चात्मनेति वन्धमोक्षौ च न स्याताम्। नचास्तु विवर्त्तोपादानत्वं ब्रह्मणो नच तेन परिणामित्वं घटत इति वाच्यं तस्येदानीमप्यसिद्धत्वात् निराकरिष्यते च विवर्त्तोपादानत्वमुपरिष्टात्। तस्मात् परमाणूनां परिमाणाद्यनारम्भकत्वेऽपि सजातीय कार्य्योपादानत्वं नानुपपन्नम्। अनुपपन्नञ्च चेतनस्याचेतनोपादानत्वमिति न जगद् ब्रह्मोपादानकमपि तु परमाणूपादानकजन्यपृथिव्यादिघटितमिति सिद्धम्। ह्रस्वपरिमण्डलाभ्यां महत्परिमाणवद् दीर्घपरिमाणवच्च द्रव्यं जायते, वाकारश्चकारार्थ इति तु सूत्रव्याख्यानमिति ध्येयम्। १।

उभयथा च न कर्म्मात स्तदभावइति ब्रह्मसूत्रं तद्भाष्यविवरणञ्च "किं तावदण्वाद्यकर्म्मनिमित्तं? प्रयत्नइति चेन्न तदानीं शरीराभावेन तस्यासम्भवात्। अथादृष्टमुच्येत तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा। उभयथापि नादृष्टनिमित्तमणुषु कर्म्मावकल्प्येतादृष्टस्याचेतनत्वात् आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वादित्येवम् आद्यकर्म्मनिमित्ताभावात् कर्म्माभावस्तस्मात् संयोगाभावस्ततस्तरां सृष्ट्यभावः" इति तया प्राप्ते—

निमित्तमैश्वरो यत्नः सर्गादावणुकर्म्मणः।
तस्मादसिद्धहेतुत्वात् सृष्ट्यभावाप्रसञ्जनम् ॥२।

ईश्वरप्रयत्नो हि सर्गादावण्वाद्यकर्म्मणो निमित्तमस्ति। प्रतिसर्गाद्यकालं परमाणून् द्व्यणूकान् करोमि विश्वं वा करो-

मीतीश्वरप्रत्यक्षविषयस्तदीयः प्रयत्नः सर्गाद्यकालीन-परमाणुकर्म्मणि कारणम् "अहमेव वातइव प्रवाम्यारभमाणा भुवनानीति" श्रौतमन्त्रवर्णात्। अत्र कारणतावच्छेदक-सम्बन्धो विषयता कार्य्यतावच्छेदकसम्बन्धश्च समवायः। नह्ययं प्रयत्नश्चेतनासम्बन्धी परमात्मसमवेतत्वात्, नापि कार्य्या-सम्बन्धी विषयतया तत् सम्बन्धित्वात्, न वा परमात्मचैतन्यं शरीरापेक्षं नित्यत्वात्। न च कार्य्यसातत्यं सर्गादावित्युक्त-त्वात्। नन्वेवमीश्वरप्रयत्नस्य नित्यत्वेनेदानीमपि तत्सत्त्वात् कारणाधीनत्वाच्च कार्य्यप्रवृत्तेः सर्गाद्यकालीनपरमाणुकर्म्म-सातत्यप्रसङ्गस्तदवस्थ एवेति चेन्न यतः सर्गादावित्यनेन सर्गाद्यकालीनत्वं न कार्य्यतावच्छेदककोटिप्रविष्टतया विव-क्षितं किन्तु परमाणुकर्म्मविशेषे कारणान्तरतया। तथाचे-श्वरप्रयत्नस्य नित्यत्वेऽपि सर्गाद्यकालरूपकारणान्तरविरहा-न्न तथाविधकर्म्मसातत्यप्रसङ्गः सामग्र्यसमवधाने कार्य्यानुत्-पत्तेः सिद्धत्वात्, नहि कुलालः सत्यपि कपाले दण्डादिरूप कारणविरहे प्रभवति नाम घटमुत्पादयितुम्। न चैव-मीश्वरस्य सर्व्वशक्तित्वव्याघात इति शङ्क्यं सर्व्वकार्य्यजनन योग्यत्वरूपस्य सर्व्वशक्तित्वस्य तावताप्यव्याघातात्। अन्यथा वटवीजात् सहकारतरोरनुद्भवदर्शनेनापीश्वरस्य सर्व्वशक्तित्व-व्याघातशङ्का प्रसज्येत। एतेन कारणान्तरनैरपेक्ष्येण सर्व्व-कार्य्यजनकत्वं सर्व्वशक्तित्वमिति निरस्तम् सर्व्वथा लाक्षणिकत्वा-पाताच्च, सर्व्वाः शक्तयो यस्येति समासविग्रहस्थपदैः कारणान्तर

नैरपेक्ष्यानभिधानात् तदर्थं लक्षणास्वीकारस्य दुर्व्वारत्वात्। घटजननशक्तः कुलालइत्यत्र कुलाले यादृशीशक्तिः पटजननशक्त स्तन्तुवाय इत्यत्र तन्तुवाये यादृशीशक्तिस्तथाविधानां तत्तत्-कार्य्यजननयोग्यतात्मिकानां सर्व्वासां शक्तीनामाश्रय इत्यस्य सर्व्व-शक्तिपदार्थत्वे बहुव्रीहिनियतामुत्तरपदस्य स्वसम्बन्धिनि लक्षणा-मन्तरेण लक्षणान्तरस्याभावेनैतत्कल्पस्यैव युक्तत्वात्। सर्गाद्य-कालस्य प्रलयकालानन्तरत्वेन तद्व्याप्तित्वेन वा कारणत्वं नतु कर्म्मघटितरूपेण तेन नेतरेतराश्रयापत्तिशङ्कापीति ध्येयम्। कालादीनां कारणत्वन्तु कालस्वभाव इत्यादिश्रुत्या प्रागुपदर्शि-तम्। एतेन नियतस्य कस्यचित्कर्म्मनिमित्तस्याभावान्नाण्वाद्यं कर्म्म स्यात् कर्म्माभावात्तन्निवन्धनः संयोगो न स्यात् संयोगा-भावाच्च तन्निवन्धना सृष्टि नस्यादित्याक्षेपः परिहृतः। नित्य-मेव च भावादिति सूत्रे परमाणूनां प्रवृत्तिनिवृत्त्युभय स्वभा-वत्वे निमित्तसातत्यात् प्रवृत्त्यादिसातत्यप्रसङ्ग इति यत् प्रत्य-वस्थानं तदपि परास्तं प्रवृत्तिहेतोः कालविशेषस्यासातत्यात्।

स्यादेतत्, तथापि द्व्यणुकारम्भकसंयोगो नोपपद्यते यतो यः खलु संयोगः परमाणोः परमाण्वन्तरेण, सहि सर्व्वा-त्मना वा स्यात् एकदेशेन वा? सर्व्वात्मना चे दुपचयानुपपत्तेरणु-मात्रत्वप्रसङ्गो दृष्टविपर्य्ययप्रसङ्गश्च एकदेशेन चेत् सावयवत्वप्रसङ्ग इतिचेन्नैष दोषः विजातीयद्रव्यसंयुक्तपरमाणोस्तथाविध परमाणुनैकदेशेन संयोगाभ्युपगमात्। तथाहि प्रथमं जीवात्म संयुक्तमनःसंयुक्तेन पवनपरमाणुना तैजसपरमाणुः संयुज्यते

तेन च जलीयपरमाणुस्तेन च पार्थिवपरमाणुरित्येवं दिगाकाशादिसंयुक्तं परमाणुचतुष्टयं नावयवि भवति तत्तत्संयोगस्यावयव्यनारम्भकत्वात्, यथाहि धान्यराशिरन्योन्यसंयुक्तोऽपि नैकोऽवयवी यथा वा नीरसंयुक्तं चीरमेकत्वेन प्रतीयमानमपि नैकमवयवि, तद्वत्। एवं राशिस्वरूपे परमाणुचतुष्टये तथाविधं परमाणुचतुष्टयम् आरम्भकसंयोगेन सजातीयपरमाणुषु प्रत्येकं संबध्यते नीरसंयुक्तचीरान्तरवत्। धान्यराशेरंशविशेषेऽनवयवभूतेऽपि यथैकदेशव्यवहारः तद्वदन्योन्यसंयुक्तपरमाणूनामनवयवभूतेऽपि प्रत्येकं परमाणावेकदेशव्यवहारसिद्धेस्तत्र तत्र संयोग एकदेशेनैव सिध्यति नहि संयोगस्य प्रादेशिकत्वम् अवयवदेशावच्छिन्नत्वेनैवेति वैशेषिकनैयायिकानामभ्युपगमः तथासत्याकाशादेर्निरवयवस्य संयोगो न स्यात्। ननु पवन परमाणुना तैजसपरमाणोः प्रथमं यः संयोगः स सर्व्वात्मना वैकदेशेन वेति चेदेकदेशेनेति ब्रूमः। कथं तत्रैकदेश इति चेत् मनःप्रभृतिसंयुक्तपवनपरमाणुरूपसमुदायैकदेशतायाः पवनपरमाणौ दिगाकाशादिसंयुक्ततैजसपरमाणुरूपसमुदायैकदेशतायास्तैजसपरमाणौ च सम्भवात्। मनसश्च जीवात्ममनःसमुदायरूपैकदेशतया तत्संयोगस्यापि प्रादेशिकत्वात्। जीवात्ममनःसंयोगस्य च जीवात्मनः परममहत्त्वेन प्रादेशिकत्वोपपत्तिः। प्रदेशस्य व्यवहारविशेषाधीनत्वं हि भवद्भिरपि ब्रह्मणि प्रदेशकथनावसरे स्वीकृतम्। न च तथाविधप्रदेशव्यवहारः काल्पनिक इति तन्मूलक-

संयोगात् न वास्तवी सृष्टि रितिवक्तुंशक्यम् यतः प्रसिद्धिमूलक एव संयोगस्य प्रादेशिकत्ववादः सा च प्रसिद्धिर्यथा विद्यते तामादाय प्रादेशिकत्वकथनेऽपि संयोगस्य काल्पनिकत्वं कथमपि नापद्यते येन तद्धेतुकसृष्टेर्वास्तवत्वमपह्नूयेत। एतेनैतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति श्रुतिरपि व्याख्याता। एतस्मात् परमात्माख्यादीश्वरात् प्राणो नाम जीवात्मा, तदाश्रितत्वात् प्राणसम्बन्धस्य, कार्य्याभिव्यक्तिद्वारा प्रकाशएव नित्यानां जन्मेत्युक्तम्। यदीश्वरप्रयत्नजन्यो जीवात्ममनसोः संयोगो न स्यात् भौतिकसृष्ट्यभावाद् जीवात्ममनसोः प्रकाशो न स्यात् सोऽयमीश्वरकारणिका जीवात्ममनसोः प्रकाशपूर्व्वावस्था एतस्माजायत इत्यनेनावेदिता। जीवात्मसंयुक्तमनःसंयोगपूर्व्वको द्विविधपञ्चभूतप्रकाशः तत्रैकविधमिन्द्रियात्मकम्, विषयात्मकमन्यविधम्। इन्द्रियस्यानुद्भूतगुणतया पृथगुपन्यासः। खस्य नित्यैकरूपत्वात् वाय्वादेः परमाण्वात्मना नित्यत्वात् खं वायुरित्यादिना प्रकाश एव सूचितो नतु वास्तवं जन्म। विश्वस्य धारिणीति जन्यभूतसृष्टिरुक्ता। इन्द्रियाणां जन्यत्वेऽपि तदारम्भकपरमाणूनां विषयात्मकवाय्वादिपरमाणुविलक्षणतया प्रकाशमध्यएव पृथगुपादानं सूक्ष्मत्वाच्च। अन्यथा इन्द्रियाणां भौतिकत्वमङ्गीकुर्व्वतां भवतामपि पृथक् तदुत्पत्तिकथनमनर्थकमित्ययं दोषो दुष्परिहरः स्यात्। यदि चापञ्चीकृतभूतसृष्टिज्ञापनार्थं तत्, खं वायुश्चेत्यादिना तु पञ्चीकरणमुक्तमित्युच्येत

तदायातं मार्गेण। स्थितस्यैव भूतस्य पञ्चीकरणात्मना प्रकाशे जायत इति जननार्थतायाः प्रकारान्तरेणाभ्युपगमात्। अथवा प्रजायेय इत्यादिवत् जायत इत्ययमन्तर्भूतण्यर्थ-प्रयोगः। एतस्मात् परमात्मनः इति यव्लोपे पञ्चमी तमाश्रित्य जीवात्मादयो जनयन्तीति समुदितार्थः। जीवात्ममनः-संयोगे जीवात्ममनसोः कारणत्वम् अनुद्भूतस्पर्शपवनपरमाणु-मनःसंयोगे मनस्तत्परामाणोरनुद्भूतविशेषगुणकज्योतिरादि-परमाणुसंयोगे तत्तत्परमाणूनां कारणत्वं ततश्चानूद्भूतविशेष-गुणकजन्यभूतं प्रति तेषां कारणत्वं तानि च सर्व्वेन्द्रियाणि भवन्ति प्रत्यक्षं प्रति जनकत्वमापद्यन्ते उद्भूतविशेषगुणानां तत्तत्परमाणूनां तथाविधजन्यभूतं प्रति शब्दादिकं प्रति च कारणत्वं ज्ञेयम्। इन्द्रियान्तर्भाविणाकाशस्य शब्द प्रत्यक्षजनकत्वं भूतान्तर्भावेन शब्दमात्रजनकत्वमिति भेदात् खमिति पुनरुपात्तम्। विश्वस्य धारिणीत्यनेन कारणत्वान्तराणि समुच्चितानि। परं सर्व्वत्रैव परमात्मनः कारणत्वमस्तीत्येतस्मादित्युक्तम्। नचोद्भूतविशेषगुणकजन्यभूतोत्पत्तेः पूर्व्वं कर्णशष्कुल्यभावात् श्रवणेन्द्रियोत्पत्तिर्न सम्भवतीति वाच्यम् अनुद्भूतविशेषगुणक-भौतिकत्वग्व्यादिनानभिव्यक्तकर्णशष्कुलीघटनसम्भवात्, उद्भूत-विशेषगुणक-तज्जातीय-स्थूलभूतेन पश्चात् तदुपचयाभ्युपगमाच्च। श्रुतेः पाठक्रममनुरुध्यायं सृष्टिप्रकारो दर्शितः। तदननुरोधे तु आकाशादिसंयुक्तपवनपरमाणुरूपसमुदायस्यैक-देशे पवनपरमाणौ पवनपरमाण्वन्तरस्यारम्भकसंयोगाद्

द्व्यणुकोत्पत्तिरेवमाकाशादिसंयुक्तेषु ज्योतिरादिपरमाणुषु ज्योतिरादिपरमाणुसंयोगाद् द्व्यणुकोत्पत्तिरेवंक्रमेण कर्णशष्कुलीघटनात् परं श्रवणेन्द्रियोत्पत्तिरिति यथासम्भवं सृष्टिक्रमो बोध्यः। अनवयवेऽपि समुदायघटके प्रदेशव्यवहारो धान्यराशिदर्शितदिशावसेयः। प्राचीनैस्तु परमाणुसंयोगी दिशोऽवच्छेदकत्वमिति वदद्भिर्निरवच्छिन्नत्वापत्तिरपाक्रियते। एवं परमाणुसंयोगस्यैकदेशावच्छिन्नत्वमुपपादितम्।

यच्चोक्तं सर्व्वात्मना चेदुपचयानुपपत्तेरणुमात्रत्वप्रसङ्ग इतितदप्रयुक्तम् उपचयो नाम परिमाणभेदस्तं प्रति सर्व्वात्मना संयोगस्याप्रतिबन्धकत्वात् अणुजन्यद्रव्यस्य परिमाणं प्रति अणुनिष्ठद्वित्वादिसंख्यायाः कारणत्वाभ्युपगमात् नहि सर्व्वात्मना संयोगो द्वित्वादिसंख्यां प्रतिबध्नाति येनोपचयानुपपत्तिरणुमात्रत्वप्रसङ्गश्च स्यादिति यदप्युक्तं दृष्टविपर्य्ययश्च प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वादिति तदपि नोपपद्यते दृष्टादृष्टसंयोगयोर्वैलक्षण्यात् अन्यथाकाशसंयोगोऽपि न स्यात्, इष्टापत्तौ च आकाशवत् सर्व्वगतश्चेति श्रुतिर्व्याकुप्येत। एवमक्षरसंयोगोऽपि न स्यात्, न चेष्टापत्तिः संयुक्तमेतत्क्षरमक्षरञ्चेतिश्रुतिविरोधात्। किञ्चैवं दृष्टविपर्य्ययाद् ब्रह्मणोऽप्युपादानत्वं बाध्यते दृष्टं हि सावयवस्य द्रव्यस्य तथाविधद्रव्यान्तरोपादानत्वं दृष्टञ्च स्पर्शवतो द्रव्यस्य स्पर्शवद्द्रव्योपादानत्वं न च ब्रह्म सावयवं न वा स्पर्शवदिति। तस्मात् परमाणोः सर्व्वात्मना

वा प्रदेशेन वा उभयथापि संयोग उपपद्यते, ततस्तत्र कर्म्माभ्युपेतव्यमतो न तदभावः इति संयोगनिमित्तं कर्म्म परमात्मप्रयत्नजन्यमुपपादितम् आदिः स संयोगनिमित्तहेतुरिति मन्त्रवर्णश्च तत्र मानान्तरम्। तथाच परमाणुस्थाद्यं कर्म्म अनुमानात् शब्दप्रमाणाच्चेत्युभयथापि विज्ञायतेऽतोन तदभाव इति वा उभयथापि न कर्म्मातस्तदभाव इति सूत्रव्याख्या पर्य्यवस्यति। एतेन विभागजनकं कर्म्मापि व्याख्यातम् प्रलयस्यापीश्वरकारणतायाः श्रुत्यादिसिद्धत्वात्।२।

समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति सूत्रम्। अस्य भाष्यन्तु "समवायाभ्युपगमाच्च तदभावइति प्रकृतेनाणुवादनिराकरणेन संबध्यते। द्वाभ्यां चाणुभ्यां द्व्यणुकमुत्पाद्यमानमत्यन्तभिन्नमणुभ्यामण्वोः समवैतीत्यभ्युपगम्यते भवता। नचैवमभ्युपगच्छता शक्यतेऽणुकारणता समर्थयितुं। कुतः साम्यादनवस्थितेः। यथैव ह्यणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवाय लक्षणेन संवन्धेन ताभ्यां संवध्यते एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् समवायलक्षणेनान्येन संवन्धेन समवायिभिः संवध्येतात्यन्तभेदसाम्यात्। ततश्च तस्य तस्यान्यः सम्बन्धः कल्पयितव्य इत्यनवस्थैव प्रसज्येत। नन्विह प्रत्ययग्राह्यः समवायो नित्यसंवद्ध एव समवायिभिर्ग्गृह्यते नासम्वद्धः सम्वन्धान्तरापेक्षो वा। ततश्च न तस्य तस्यान्यः सम्वन्धः कल्पयितव्यो येनानवस्था प्रसज्येतेति। नेत्युच्यते संयोगोऽप्येवंसति संयोगिभिर्नित्यसंवद्ध एवेति समवायवन्नान्यं सम्वन्ध-

मपेक्षेत। अर्थान्तरत्वात् संयोगः सम्बन्धान्तरमपेक्षेत समवायोऽपि तद्वदर्थान्तरत्वात् सम्बन्धान्तरमपेक्षेत। तस्माद-र्थान्तरं समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था। प्रसज्य-मानायाञ्चानवस्थायामेकासिद्धौ सर्व्वासिद्धेर्द्वाभ्यामणुभ्यां द्व्यणु-कं नैवोत्पद्येत।" इत्यन्तम्। तदेवं परमाणुकारणवादखण्डने प्राप्त उच्यते—

समवायः प्रसिद्धो हि धीविशेषस्य गोचरः।

तत्सम्बन्धः स्वरूपाख्यः संयोगो नैव तत्समः॥ ३।

उक्तं गुणगुणिनोर्मिथोभिन्नत्वं ब्रह्मसूत्रे तद्भाष्ये च तद्यथा-न्तराधिकरणे "सुखविशिष्टाभिधानादेव चेति, सुखविशिष्टं हि ब्रह्म यद्वाक्योपक्रमे प्रक्रान्तं प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति तदेवेहाभिहितमिति इष्टं हि सुखस्य गुणस्य गुणिवद्ब्रह्मत्व"-मिति। इयं हि सूत्रभाष्याभ्युपगता सुखविशिष्टबुद्धिर्गुण-विशिष्टबुद्धिर्व्वा विशेषण-विशेष्य-सम्बन्ध-विषया विशिष्टबुद्धित्वा-द्दण्डिपुरुषइति विशिष्टबुद्धिवदित्यनुमानेन गुणगुणिनो-र्मिथःसंयोगाद्यभावादतिरिक्तसम्बन्धसिद्धिः सएवातिरिक्तः सम्बन्धः समवाय इत्युच्यते। स च स्वात्मकेन स्वरूपसम्बन्धेन समवायिनि सम्बध्यते, नच संयोगस्तथा भवति दृष्टविरोधात्। संयोगसम्बन्धिद्वयं हि कदाचित् संयुज्यमानं कदाचिद्द वियुज्य-मानञ्च पृथग् दृश्यते, नत्वेवं समवायसम्बन्धिद्वयम् एवं प्रतीयमाने संयोगवैलक्षण्ये कथं संयोगसमवाययोः साम्यमुच्यते, सम्बन्धत्वरूपेण साम्यञ्चेत् प्रमेयत्वेन घटादिव्यावृत्तत्वेन वा

ब्रह्मणोऽपि संयोगसाम्यादनित्यत्वापत्तिः, किञ्च समवायानभ्युपगमेऽपि सुखादिविशिष्टबुद्ध्यर्थं कश्चित् सम्बन्धोऽभ्युपगन्तव्यः, तत्राप्येवमनवस्थादोषः कथं त्वया परिहरणीयः, अथ तत्र तादात्म्यमेव सम्बन्धः तस्य सम्बन्धिभ्यामत्यन्तभेदविरहेण नोक्तदोषप्रसङ्ग इति चेत् मैवं तादात्म्यसम्बन्धेन ब्रह्मणि सुखविशिष्टताप्रत्ययस्य गुणित्वप्रत्ययस्य च निर्व्वाहासम्भवात्, तथात्वे तु गुणी गुणीति प्रत्ययः स्यात् शुक्लः पट इत्यादिवत् रूपं घट इति रसः फलमित्यादयश्च प्रत्ययाः स्युः, गुणस्य गुण इतिवद् गुणिनो गुण इत्यपि प्रत्ययो न स्यात् सुखस्य गुणस्य गुणिवद्भेदत्वमिति भाष्योक्तभेदनिर्द्देशश्च व्याहन्येत। अथ स्वरूपमेव सम्बन्ध उच्यते, इतिचेदुच्यतां तावद् गुणगुणिनौ भिद्येते न वा? भिद्येते चेदत्यन्तभिन्नयोरेकतरात्मकेन स्वरूपसम्बन्धेन वैशिष्ट्याङ्गीकारे हिमवद्विन्ध्ययोरपि वैशिष्ट्यं प्रसज्येत। किञ्च संयोगादिरपि संबन्धो न स्यात्। सम्बन्ध्यात्मकेन स्वरूपेणैव निर्व्वाहात्। इष्टापत्तौ च पीता हरिद्रा लोहितं जवापुष्पमित्यादिवत् पीतः सन्दी लोहितं गगनमित्यपि चक्षुषा प्रतीयेत। क्रियायाः कालस्वरूपत्वेन कालस्य च जन्याधारत्वेन हरिद्रादौ काले च पीतादेः सम्बन्धाविशेषात्। यथा हि हरिद्रादौ पीतादिः स्वरूपसम्बन्धः, तथा कालेऽपीति। नच कालवृत्तितावच्छेदकं कालस्वरूपं सम्बन्धान्तरं कल्प्यं तेन चेदानीं तदानीमित्यादि प्रतीतिमात्रं निर्व्वहति नतु पीतत्वादिप्रकारककालविशेष्यकप्रतीतिरपीति वाच्यं यन्त्रसन्दात्मक

कालविशेषलौकिकचाक्षुषकाले इदानीं पीत इति अतीत-घटानधिकरणेऽस्मिन्काले पीत इति चाक्षुषवद्वा सन्द: पीत इति-लौकिकचाक्षुषापत्तेरपाकर्त्तुमशक्यत्वात् सामग्र्यधीनत्वात् कार्य्यस्य। नच तथाविधचाक्षुषसामग्र्येव नास्तीति कल्पयितुं शक्यम्, विशेष्यविशेषणातिरिक्तसम्बन्धस्यानभ्युपगमात्। विशेष्यविशेषणचाक्षुषे विशेषणविशेष्यवृत्तित्ववत् विशेषण-विशिष्टविशेष्यस्यापि चाक्षुष-विषयताया दुर्व्वारत्वात् को नाम प्राज्ञमानी पुरुषवृत्तिदण्डलौकिकचाक्षुषकाले दण्डिपुरुषस्य लौकिकचाक्षुषगोचरत्वं प्रत्याचक्षीत। समवायाभ्युपगमे च पीतोऽयमित्याद्याकारकलौकिकचाक्षुषं प्रति चक्षुःसंयुक्तेदन्त्वाद्यवच्छिन्नसमवायरूपसन्निकर्षस्य इदानीं पीत इत्यादि-लौकिकचाक्षुषं प्रति च चक्षुः-संयुक्तसमवेतसन्दात्मककाल-विशेषणतारूपसन्निकर्षस्य कारणतया भवत्येव सामग्रीभेदः। तस्मादिदानीं पीत इतिचाक्षुषकालेऽपि पीतः सन्द इत्यादि-चाक्षुषापत्तिर्नसम्भवति। यदि चेदानीं तदानीमिति प्रत्ययो-महाकालाद्यवगाहीति न तत्प्रत्ययस्य लौकिकचाक्षुषत्वं न वा क्रियात्मककालसम्बन्धस्य पीतरूपादावभ्युपगमो येन पीतः सन्दइति चाक्षुषापत्तिः स्यादित्युच्यते तथापि अस्मिन् काले पीत इत्यादि रूपायाः कालत्वेन क्रियावगाहिन्या लौकिक-चाक्षुषप्रतीतेरन्यथानुपपत्त्या क्रियात्मककालसम्बन्धस्य पीत-रूपादौ स्वीकरणीयत्वेन चेदन्त्वेन क्रियावगाहिनी पीतो-ऽयमिति लौकिकचाक्षुषप्रतीतिरापादयितुं शक्यते। अपिच

भवन्मते इदानीं तदानीमित्यादिप्रत्ययस्य क्रियावागहित्वा-भ्युपगमेन प्रदत्तपूर्व्वो पीतः स्पन्द इत्यादिचाक्षुषापत्तिरेव दुर्व्वारा। नच कालो गौरित्यादिवत् स्पन्दः पीत इत्यादि-प्रतीतिरिष्यतएवेति वाच्यं कालो गौरित्यादिप्रत्ययस्य लौकिक-चाक्षुषत्वानभ्युपगमेन दृष्टान्तासिद्धेः। किञ्च विशिष्टबुद्धेः संसर्गताख्यविषयातायां नानाधर्म्मिकत्वे गौरवमतिरिक्तैक-नित्यसम्बन्धवृत्तित्वे लाघवमितिज्ञानसहकृतधर्म्मिग्राहकमानेन समवायसिद्धिरप्रत्यूहेति। समवायस्य तु स्वात्मकस्वरूपसम्बन्धेन समवायिसम्बन्धित्वे न किञ्चिद्बाधकमिति नानवस्थाप्रसङ्गः॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति सूत्रार्थस्तु, साम्यादनवस्थितेश्च समवायाभ्युपगमात् परमाणुकारणत्वं सिद्धमिति शेषः। यदि नाम गुणद्रव्ययोरसम्बद्धत्वाविशेषेऽपि वैशिष्ट्यं तदा द्रव्यं गुणवदितिवत् गुणो द्रव्यवानित्यपि स्यात्—असम्बद्धत्वसाम्यात्। पृथिवी गन्धवतीतिवत् जलं गन्धवदित्याद्यपि स्यात् तथा साम्यात्। एवमसम्बद्धवस्तूनामन्योन्यवैशिष्ट्याभ्यु-पगमेऽनवस्थितिरव्यवस्था तथाहि तद्वैशिष्ट्यमतिरिच्यते न वा, यद्यतिरिक्तं स एव समवायः, यदि नातिरिक्तं सैवाव्यवस्था। सम्बन्धरहितानामपि वैशिष्ट्यस्य दुर्व्वारत्वात्। समवायाभ्यु-पगमएव हेत्वन्तरमुत्तरसूत्रेणाविद्यते नित्यमेव च भावादिति —अयुतसिद्धत्वादित्यर्थः न हि गुणादिकं द्रव्यमपहाय क्षण-मप्यवतिष्ठते संयुक्तं द्रव्यद्वयन्तु संयुक्तावस्थमप्यवतिष्ठत इति संयोगविलक्षणः सम्बन्धो गुणादीनां द्रव्येष्ववयविनाञ्चावय-

वेष्वित्येवंसमवायस्वीकारे द्व्यणुकसमवायिकारणतया परमाणुसिद्धिरिति संक्षेपः।

रूपादिमत्त्वाच्च विपर्य्ययो दर्शनादिति सूत्रम्। तद्भाष्यन्तु "रूपादिमत्त्वात् परमाणूनाम् अणुत्वनित्यत्वविपर्य्ययः प्रसज्येत। कुतः एवं लोके दृष्टत्वात् यद्धि लोके रूपादिमद्वस्तु तत्स्वकारणापेक्षया स्थूलमनित्यञ्च दृष्टम्। तद् यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति तथा चामी परमाणवो रूपादिमन्तस्तैरभ्युपगम्यन्ते तस्मात्तेऽपि कारणवन्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति। यच्च नित्यत्वे कारणमुक्तं सदकारणवन्नित्यमिति तदप्येवमणुषु न संभवति। यदपि नित्यत्वे द्वितीयं कारणमुक्तम् अनित्यमिति च विशेषतः प्रतिषेधाभावइति तदपि नावश्यं परमाणूनां नितत्वं साधयति असति हि यस्मिन् कस्मिंश्चिन्नित्ये नित्यशब्देन नञः समासो नोपपद्यते न पुनः परमाणुनित्यत्वमेवापेक्षते। यदपि तृतीयं कारणमुक्तम् अविद्या चेति अथ कारणविभागात् कारणविनाशाच्चान्यस्य तृतीयस्य विनाशहेतोरसम्भवोऽविद्या सा परमाणूनां नित्यत्वं ख्यापयतीति व्याख्यायेत नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनष्टुमर्हतीति नियमोऽस्ति घृतकाठिन्यविलयनवन्मूर्त्तावस्थाविलयनेनापि विनाश उपपद्यते।" इत्येव माक्षेपान्तरे प्राप्ते उच्यते—

रूपादिकमद्धेतुः स्यात् स्थौल्यानित्यत्वसाधने।
तन्त्वादौ व्यभिचारेण प्रतिपक्षवत्वेन च॥ ४।

तन्तवो हि तूलादुत्पद्यन्ते इति श्रीमतामभ्युपगमः प्रचित-तूलापेक्षया तन्तूनां सूक्ष्मत्वात् रूपादिकं कारणापेक्षया स्थौल्यसाधनाय नालं भवति तत्र व्यभिचारात्, नाप्यनित्यत्व-साधनाय, कार्य्यकारणानन्यत्ववादिनां भवतां मते ब्रह्मणोऽपि रूपसम्बन्धेन व्यभिचारात्। अथ प्रत्यगात्मनि न वास्तवरूप सम्बन्ध इति चेत् तथापि व्याप्तिरसिद्धा ननु लोके दृष्टत्वादिति व्याप्तिसाधकमुक्तमिति चेन्न दृष्टं हि लोके रूपादिमतां रूपादिमत्कारणकत्वं तत्तु रूपादिहीनब्रह्मकारणकत्व-वादि-भिर्नाभिप्रेतुं शक्यते श्रीमद्भिः। उपाधिश्च भावत्वानुमाने कारण-गुणारब्धगुणः, सावयवरूपादिकं, रूपादिमत्कारणकरूपादिकं वा जागर्त्ति स च व्यभिचारादिकमुन्नयन् हेतुमाभासीकरोति। तस्मात् परमाणूनां स्थौल्यादिसाधने रूपादिकमहेतुः।

प्रतिपक्षस्य सत्त्वे सत्यकारणवत्त्वं तद्धि परमाणूनां नित्यत्वं साधयति सति ह्यन्यूनवले प्रतिपक्षे रूपादिभिरनित्यत्वसाधनं न सम्भवति। न च अकारणवत्त्वं हेतुः परमाणुष्वसिद्धः। रूपादिभिः कारणवत्तायाः साधितत्वादिति युज्यते वक्तुं निर-वयवत्वेन हेतुना तस्यापि सत्प्रतिपक्षितत्वात्। फलन्तु प्रदर्शितेनोपाधिना रूपादिहेतोर्दुर्ब्बलीकारेण नित्यत्वसिद्धि-रेव। यच्च भाष्ये "यदपि नित्यत्वे द्वितीयं कारणमुक्त"मित्युप-क्रम्य दूषणाय प्रयतितं तदपि निष्फलमेव, वैशेषिकसूत्र-कृदाशयस्यान्यथाकारात् 'अनित्यमिति च विशेषतः प्रतिषेधा-भाव' इति सूत्रावतरणिकायामुक्तं हि मिश्रैरिदानीं सर्व्वा-

नित्यतावादिनिराकरणायाहेति। अविद्येति सूत्रस्य च परमाणोरनित्यत्वविषया सर्व्वाप्यनुमितिरविद्या भ्रमरूपा आभासविशेषप्रभवत्वादित्यर्थः।

भाष्यदर्शितार्थमनुसृत्यापि शक्यते तदुपपादनं कर्त्तुं तथाहि कारणविभागात् कारणविनाशाच्चान्यस्य तृतीयस्य विनाश-हेतोरसम्भवोऽविद्या सा परमाणूनां नित्यत्वं ख्यापयतीति चरमं सूत्रार्थमुपवर्ण्य भाष्यकृद्भिराक्षिप्तं 'नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनष्टुमर्हतीति नियमोऽस्ति घृतकाठिन्य-विलयनवन्मूर्त्तावस्थाविलयनेनापि विनाश उपपद्यते' इति तदयुक्तं दृष्टान्तासिद्धेः। भवति हि प्रथमं वलवता तेजःसं-योगेन कठिनघृतद्व्यारम्भकपरमाणूनां क्रिया, क्रियातो विभागस्तत आरम्भकसंयोगनाशादिपरम्परया काठिन्यनाश-स्ततो द्रवत्वोत्पत्तिरित्येवं क्रमेण द्रवत्ववद्घृतमहावयव्युत्पत्ति-रित्येतत्प्रवाहपतितं काठिन्यविलयनं प्रति विभागस्य हेतु-त्वम्। पीलुपाकमतमेतत्। पिठरपाकवादिनां मते तु तेजः-संयोगेन कठिनघृतक्रिया ततोविभागस्तत्क्रमेण काठिन्य-विलयनं द्रवत्वोत्पत्तिश्चेति सर्व्वथा काठिन्यविलयनं हि कारण-विभागं नातिक्रामति। तस्माद्घृतकाठिन्यविलयनं न खलु विनाशहेतोस्तृतीयस्य ज्ञापने दृष्टान्तभावं लब्धुमर्हतीति।

पृथिव्यादीनां 'रूपादिमत्त्वाच्च' 'विपर्य्ययः' ब्रह्मोपादानकत्व-विपर्य्ययः—ब्रह्मानुपादानकत्वं, 'दर्शनात्' लोके दृष्टत्वात्। रूपादिमज्जन्यं रूपादिमदुपादानकमेव लोके दृश्यते, दृश्यते च

विचित्रं जगत् विचित्रोपादानकं, नह्येकोपादानकं वस्तु विभिन्नजातीयं भवति तस्मादनुपपन्नो ब्रह्मोपादानकत्ववाद उपपन्नश्च परमाणूपादानकत्ववाद इति तु सूत्रार्थः । ४ ।

'उभयथा च दोषात्' इति सूत्रम् । अत्र परमाणव उपचितापचितगुणाः कल्प्येरन्न वा ? उभयथापि च दोषानुषङ्गोऽपरिहार्य्य एव स्यात् । कल्प्यमाने तावदुपचितापचितगुणत्वे उपचितगुणानां मूर्त्त्युपचयादपरमाणुत्वप्रसङ्गः अकल्प्यमाने तूपचितापचितगुणत्वे यदि तावत् सर्व्वे एकैकगुणा एव कल्प्येरन्, ततस्तेजसि स्पर्शोपलब्धिर्न स्यात् अथ सर्व्वे चतुर्गुणा एव कल्प्येरंस्ततोऽप्स्वपि गन्धस्योपलब्धिः स्यादिति भाष्यकृताक्षेपे उच्यते ।

गुणाधिक्येन न स्थौल्यं भिन्नाश्च गुणिनो गुणाः ।
परिग्रहोऽस्ति सामान्यात् स्मृत्युक्तेश्च विशेषतः । ५ ।

समसंख्यकगुणानामपि मूर्त्त्युपचयापचयौ भवदभिमतौ भवतः । तथाहि पृथिव्यां गन्धादयश्चतुर्द्दश गुणा अप्स्वपि गन्धहीनाः स्नेहयुताश्चतुर्द्दश तथापि श्रीमद्भिरुच्यते स्थूला पृथिवी तदपेक्षया सूक्ष्माश्चाप इति । नच विशेषगुणोपचयान् मूर्त्त्युपचय इति वक्तुं शक्यम्, गन्धरसरूपस्पर्शाख्यविशेषगुणचतुष्टया खलु पृथिवी, रसरूपस्पर्शस्नेहसांसिद्धिकद्रवत्वाख्यविशेषगुणपञ्चकाश्चाप इत्यपां विशेषगुणोपचयेऽपि सूक्ष्मत्वमपचयेऽपि पृथिव्याः स्थौल्यं भवद्भिरङ्गीक्रियते नच गन्धादि-पञ्चकोपचयापचयकृतौ मूर्त्त्युपचयापचयाविति कश्चिन्नियमोऽस्ति

स्पर्शमात्रगुणेन वायुना शब्दमात्रगुणस्याकाशस्य सममूर्त्तिकत्वप्रसङ्गात् एकैकगुणवत्त्वेन साम्यात्। वाय्वादीनां शब्दादिगुणवत्त्वाभ्युपगमस्य निर्युक्तिकत्वात्। तदभ्युपगमे त्वाकाशस्य सिद्धिरेव न स्यात्। किञ्च कोऽयं स्थौल्यापरनामा मूर्त्त्युपचयः अधिकपरिमाणकत्वम्, अधिकावयवत्वम्, अधिकेन्द्रियग्राह्यत्वम्, अधिकेन्द्रियग्राह्यगुणकत्वं वा ? नाद्यः परिमाणाधिक्ये गुणाधिक्यस्याप्रयोजकत्वात् पृथिव्यपेक्षया जलादीनामधिकपरिमाणत्वेन स्थूलत्वप्रसङ्गाच्च। न द्वितीयः, गुणाधिकस्यापि द्विकपालकमृन्मयघटस्य महतस्त्रिकपालकहिरण्मयघटादवयवाधिक्यविरहात्। न तृतीयः, यथा पृथिवी चक्षुषा त्वचा च गृह्यते, तथैवापस्तेजश्च नैतत्त्रयमेतदतिरिक्तेन केनचिदिन्द्रियेण गृह्यते, तदेषां समानेन्द्रियग्राह्याणां मूर्त्त्युपचयापचयाभ्युपगमो भवतामसङ्गतः स्यात्। अथ चतुर्थः, शालसर्षपयोरपि मूर्त्त्युपचयापचयौ न स्याताम्, तयोस्तुल्येन्द्रियग्राह्यगुणकत्वात्। न च मूर्त्त्युपचयं प्रति गुणाधिक्यमेकं प्रयोजकं प्रयोजकान्तरञ्चास्ति तेन क्वचिद्गुणाधिक्यासम्भवेऽपि प्रयोजकान्तरवशात् मूर्त्त्युपचय इति शक्यते वक्तुं, सर्व्वत्रैव तथाकल्पनसम्भवेन गुणाधिक्यस्यान्यथासिद्धत्वात्। तथाविधमूर्त्त्युपचयापचययोः पारिभाषिकमात्रतया पार्थिवादिपरमाणुषु तत्स्वीकारेऽपि क्षत्यभावात्। नह्यधिकेन्द्रियग्राह्यगुणकत्वं परमाणुत्वं विरुणद्धि। तस्माद् गुणाधिक्योपन्यासेन मूर्त्त्युपचयापचयप्रसञ्जनं दुरुक्तमेव।

उभयथा च दोषादिति सूत्रार्थस्तु 'उभयथा' ब्रह्मणो रूपादिमत्त्वाङ्गीकारे वैचित्र्याङ्गीकारे 'च' 'दोषात्' श्रुतिव्याकोपात् अशब्दमस्पर्शमरूपमव्ययमित्यादिश्रुतेः एकमेवाद्वितीयमित्यादिश्रुतेश्च वाधात्। भौतिकत्वाद्यापत्त्या युक्तिविरुद्धत्वाच्चेति।

स्यादेतत् तथापि 'अपरिग्रहाच्चात्यन्तमनपेक्षेति' सूत्रमद्यापि जागर्त्ति तद्भाष्यं हि 'प्रधानकारणवादो वेदविद्भिरपि कैश्चित् परिगृहीतः, अयन्तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिरिति' तदपाकर्त्तुमुत्तरार्द्धमाह, द्वितीयपादव्याख्यात्तिस्तु पाठक्रमादार्थक्रमस्य वलवत्तया परस्तादुपदर्शयिष्यते। परिग्रह इति। श्रूयते हि श्वेताश्वतर मन्त्रे 'भूतानि योनि' रिति 'आदिः स संयोगनिमित्तहेतु' रिति च। स्मर्य्यते च महाभारते शान्तिपर्व्वणि—(२४७ अध्याये) "येभ्यः सृजति भूतानि काले भावप्रचोदितः। महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः। तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः। एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयम्। विद्धि नारद पञ्चैतान् शाश्वतानचलान् ध्रुवान्। महतस्तेजसो राशीन् कालषष्ठान् स्वभावतः। आपश्चैवान्तरिक्षञ्च पृथिवी वायुपावकौ। नासौहि परमं तेभ्यो भूतेभ्यो मुक्तसंशयम्। नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयमिति" अत्र पञ्चानामेव महाभूतानां नित्यत्वमुक्तम्, तच्चतुर्णां परमाणुलक्षणानामेवोपपद्यते तदन्येषामवयवयोगादनित्यत्वं सिद्धम्। अन्तरिक्षस्य लोक-

स्वरूपस्य नित्यत्वमेव। तेभ्यो भूतेभ्यो जगत्सृष्टिः कालो निमित्तकारणं भावोऽदृष्टञ्च निमित्तकारणान्तरम् आत्मा कर्त्ता इत्येतेभ्यः परं कारणतत्वमसत् नहि तदुपपत्त्या प्रमाणेन युक्त्या वा साधयितुं शक्यते। आत्मत्वेन सामान्येनात्रेश्वर-जीवयोर्ग्रहणम्। इति सामान्यतो वैशेषिकमतपरिग्रहो-ऽस्ति। मतान्तरस्य चैतन्मुखेनासद्विषयकत्वप्रतिपादनेनापरि-ग्राह्यत्वमावेदितम्। तथाच वैशेषिकमतस्य परिग्रहोऽस्ति, मतान्तरस्य च परिग्रहो नास्ति, प्रथमपादस्थ नञ् पदानु-षङ्गात्। नास्तीत्यत्र नञ् पदं विरोधार्थकं तेन परिग्रह विरोधोऽपरिग्राह्यत्वज्ञापनम् अस्तीति पर्य्यवसन्नम्। एवञ्च प्रधानादीनां मायायाश्च एतेष्वेव तत्त्वेष्वन्तर्भावः, न तु तत्त्वा-न्तरत्वं तेषामिति सर्व्वशास्त्रसमन्वयः। अन्यथा महाभारतो-क्तिरियमसङ्गता स्यात्। नित्यपरमाणुगोचरसाधारणमत-परिग्रहश्च मार्कण्डेयपुराणात्मकस्मृतावस्ति, "त्वमक्षरं परं देवि यत्र सर्व्वं प्रतिष्ठितम्। अक्षरं परमं देवि संस्थितं परमाणुवत्।" इति। किञ्च 'उलूकः परमो विप्र' इति महा-भारतोक्तस्य महर्षेरुलूकस्य वैशेषिकदर्शनं विविधश्रुतिस्मृति-समुद्घोषितमहिम्नो भगवतो गौतमस्य न्यायदर्शनञ्च स्मृतिः तत्र विशेषतः परिगृहीतः परमाणुकारणवादः कथमनादर-णीयो भवेत्। यस्तु तद्दर्शनं नाद्रियते तन्निन्दामाह महा-भारतम् (शान्तिपर्व्व २६८ अः ६४) "वेदवादं व्यपाश्रित्य मोक्षो-ऽस्तीति प्रभाषितुम्। अपेतन्यायशास्त्रेण सर्व्वलोकविग-

र्हिणा।" इति। प्रभाषितुमित्यस्य शक्यमिति पूर्व्वेणान्वयः। उपेक्षितन्यायशास्त्रस्य वेदवादमात्राश्रयणेन मोक्षोऽस्तीति-भाषणमात्रं शक्यं न तु तदधिगमोऽपि तस्य न्यायशास्त्राधीनत्वात्। तथाच परित्यक्तन्यायशास्त्रो वेदवाद्यपि लोकविगर्हितो भवतीति समुदितार्थः।

यच्चापरम् अपरिग्रहादित्यादिसूत्रभाष्ये लपितं "वैशेषिकास्तन्त्रार्थभूतान् षट्पदार्थान् द्रव्यगुणकर्म्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान् भिन्नलक्षणानभ्युपगच्छन्ति, यथा मनुष्योऽश्वः शश इति तथात्वं चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति तन्नोपपद्यते यथाहि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति, एवं द्रव्यादीनामत्यन्तभिन्नत्वान्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ भवति द्रव्याधीनत्वं गुणादीनां ततो द्रव्यभावे भावाद् द्रव्याभावेऽभावाद् द्रव्यमेव संस्थानभेदादनेकशब्दप्रत्ययभाग् भवति। यथा देवदत्त एक एव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग् भवति तद्वत्। तथा सति सांख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम्।" इति। तदपाकर्त्तुमाह "भिन्नाश्च गुणिनो गुणा इति। तथाच गुणादीनां द्रव्यभिन्नानामपि द्रव्याधीनत्वं तु वह्निभिन्नस्य सतो धूमस्य वह्न्यधीनत्ववदुपपद्यते नच तत्रास्ति भेदप्रतीतिरिह तु शुक्लः कम्बलो रोहिणी धेनुरिति द्रव्यस्यैव तेन तेन विशेषेण प्रतीयमानत्वान्नैव द्रव्यगुणयोर्भेदप्रतीतिरिति

वाच्यं धूमवान् वह्निः, निर्धूमो वह्निरित्यादिप्रतीत्या क्वचिद्
वह्नौ धूमस्य क्वचिच्च धूमाभावस्य विशेषणत्वेऽपि यथा धूम
धूमाभावयोर्नवह्न्यभेदस्तथा शुक्लादि वर्णात्मकानां शुक्लत्वादीनां
न द्रव्याभेदः। अथ शुक्लः कम्बल इति तादात्म्यग्रहादभेद
इति चेदत्र शुक्लशब्दस्य शुक्लरूपवति निरूढ़तया तथाप्रयोगः
अन्यथा रूपं कम्बल इत्याद्यपि स्यादित्युक्तम्। अयुतसिद्ध-
त्वाच्च गुणानां द्रव्याधीनत्वम्। अयुतसिद्धत्वञ्चापृथग्देश-
संयुक्तत्वं, तच्च धर्म्मिणः संयोगसम्बन्धावच्छिन्नप्रतियोगिताका-
भावव्यापकीभूताभावीयं धर्म्मस्य संयोगसम्बन्धावच्छिन्नप्रति-
योगित्वं, संयोगसम्बन्धावच्छिन्नप्रतियोगिताकतन्त्वभावव्याप-
कीभूतः खलु संयोगसम्बन्धावच्छिन्नप्रतियोगिताकः पटाभावो
भवतीति पटस्यापृथग्देशसंयुक्तत्वं, गुणादौ तदभावस्तु
सुतरामेव। अथवा 'युतयोः' इदानीं सम्बद्धयोः एतस्मात्
सम्बन्धात् पूर्व्वं स्थितिः 'सिद्धिः' युतसिद्धिः, यथा घटभूतलयो-
र्जतुकाष्ठयोश्च। तदभावः सम्बद्धयोः सम्बन्धात् प्रागसिद्धिः
अयुतसिद्धिः, एकासिद्धावुभयासिद्धेः। नहि शुक्लत्वस्य
कम्बले यः सम्बन्धः तेन सम्बन्धिनोः शुक्लत्वकम्बलयोः तस्मात्
सम्बन्धात् पूर्व्वं स्थितिर्भवति कम्बलस्य स्थितत्वेऽपि शुक्लत्वस्य
सम्बन्धात् पूर्व्वमनवस्थानात्। नच प्रागसिद्धस्य अलब्धात्म-
कस्य कार्य्यस्य कारणेन सम्बन्धो नोपपद्यते द्वयायत्तत्वात्
सम्बन्धस्येति युज्यते वक्तुं समवायस्य नित्यत्वेन कार्य्योत्पत्ति-
क्षणएव सम्बन्धोपगमात् तत्पूर्व्वन्तु कार्य्यस्यानवस्थानादेव

न सम्बन्धित्वम्। स च सम्बन्धः समवायस्तस्यातिरिक्तत्वञ्च साधितपूर्व्वम्। पितृत्वपुत्रत्वादयो हि सम्बन्धाः पितरि पुत्रादौ च वर्त्तन्ते ते च देवदत्ताद् देवदत्तत्वाच्चातिरिक्ता एव। तथाच पित्रादिशब्दव्यवहारदृष्टान्तेन सम्बन्धस्य सम्बन्धिनोऽनन्यत्वसाधनमसञ्जसम्। नहि पितृत्वपित्रोः पुत्रत्व-पुत्रयोर्व्वानन्यत्वमानुभविकं यौक्तिकं वा। दूषणान्तरञ्चापास्तपूर्व्वमिति तस्मात् अपरिग्रहाच्चात्यन्तमनपेक्षेति सूत्रं वक्ष्यमाणार्थकत्वेन पर्य्यवसेयम्। स ह्यर्थः ब्रह्मणो जगदुपादानत्वे 'अत्यन्तमनपेक्षा' अत्यन्तमनाश्वासः, कुतः 'अपरिग्रहात्' अनुपादानात्। यत् खलु कार्य्यार्थिभिरुपादीयते घटाद्यर्थिभिरिव मृदादि तदुपादानमुच्यते, नहि ब्रह्मोपादातुं शक्यते कथं तस्योपदानत्वं स्यादिति। नन्वेवं जन्माद्यस्येति सूत्रस्य का गतिः इति चेत् कुलालाद् घट इति वत् निमित्तकारणे पञ्चमीप्रयोगात् नच परमाण्वादावतिव्याप्तिः परमाणोर्द्व्यणुकारम्भकत्वेऽपि स्थूलं प्रत्यहेतुत्वात् नच कालादावतिव्याप्तिः, ब्रह्मलक्षणप्रविष्टकारणतायाः कालादिव्यावृत्तसम्बन्धघटितत्वेनातिव्याप्तिव्युदासात्। तस्मादीश्वरकर्तृकत्वं परमाण्वाद्युपादानकत्वञ्च जगत इति ब्रह्मसूत्रार्थः। भाष्यन्त्वद्वैतपक्षप्रवेशलीलयैवान्यथाकृतमिति प्रागुक्तमत्र परत्र च स्मर्त्तव्यम्।

इति गौतमसिद्धकुलोद्भव-नानादर्शनपरमाचार्य्य-श्रीपञ्चाननतर्करत्न-भट्टाचार्य्य-कृतायां द्वैतोक्तिरत्नमालायां द्वितीया यष्टिः।

---

अथ तृतीया यष्टिः।

एतावता स्वपक्षदोषमुद्धृत्य परपक्ष निराकरणार्थमध्यास निरासप्रधानेयं यष्टिरारभ्यते।

परपक्षो हि—रज्जुः सर्पवदवभासते शुक्तिका हि रजतवदवभासत इति लोकानुभवः, इमञ्चावभासमनुसृत्य भीतः पलायते धावति चोपादातुं यावद्रज्ज्वाद्यधिष्ठानसाक्षात्कारो न स्यात्। सचायमवभासो दोषप्रयुक्तो विषयाकारो ज्ञानाकारश्चेति द्वेधा। विषयाकारो हि रज्जु-सर्प-शुक्तिकारजतादिरूपः तस्योपादानं रज्जुशुक्तिकादि। एवं ब्रह्मैव जगद्रूपेणावभासते दोषग्रस्तस्य। व्यवहारश्च तथैव प्रवर्त्तते यावद् ब्रह्मसाक्षात्कारो न स्यात्। विषयाकारोऽयं जगदध्यासो ब्रह्मोपादानकः। ननु ज्ञानाकार एवाध्यासोऽस्तु किम् तस्य विषयाकारत्वकल्पनयेति चेन्न विषयाध्यासं विना ज्ञानाध्यासासम्भवात्। नह्येकविधो विषयः अन्यविधश्च तज्ज्ञानं भवति, घट इति विषयः घट इति ज्ञानमित्यादीनां विषयविषयिणामैकरूप्यनियमात्। ज्ञानस्य स्वतःप्रमाणत्वनैवान्यथाख्यातेर्निरस्तत्वात्। तथाच यथा रज्ज्वादयः स्वस्वरूपमपरित्यजन्तस्तावदध्यस्तसर्पोपादानतां भजन्ते एवं निरस्तसमस्तविशेषं ब्रह्माप्यविक्रियमाणमेवाध्यस्तजगदुपादानं भवति स चाध्यासः स्मृतिरूपः परत्र पूर्व्वदृष्टावभासः। ननु इन्द्रियसन्निकर्षेण सामान्यतो गृह्यमाणे हि रज्ज्वादौ विषये भवति सर्पाद्यध्यासः

कथं पुनरतीन्द्रिये ब्रह्मण्यविषये जगदध्यास इति चेन्नैष दोषः, अतीन्द्रियेऽपि नभसि तलमलिनताद्यध्यासदर्शनात्। नापि ब्रह्मैकान्तेनाविषयः अस्मत्प्रत्ययेन विषयीकृतत्वात्। स्वप्रकाशत्वेनापरोक्षत्वाच्चेति।

अत्रोच्यते—

नाहङ्कारास्पदेऽध्यासो वह्निस्तदवभासनात्।
नच दृष्ट्यनवच्छिन्ने प्रत्यग्दृष्टौ च नेष्यते॥ १।

नाध्यास इति द्विरावर्त्तनीयम्। तयोरेकस्यार्थः, अध्यासो विषयाध्यासो नास्ति, असम्भवादिति शेषः। तथाह्यध्यासो नाम स्मृतिरूपः परत्र पूर्व्वदृष्टावभास इति स्मृतिरूपइत्यस्य पूर्व्वदृष्टेत्यस्य चोपपादकमात्ररूपत्वमङ्गीकुर्व्वन्त एकावच्छेदेन स्वसंसृज्यमाने स्वाभाववति अवभास्यत्वं तदर्थमाहुः, एकावच्छेदेन स्वसंसर्गस्य स्वाभावस्य विरुद्धः नन्वेकविधः स्वसंसर्गोऽन्यविधसम्बन्धावच्छिन्नप्रतियोगिताकश्च तदभाव इति कुतो विरोध इति चेन्न घटवति भूतले घटस्याप्यध्यस्तत्वापत्तेः। संयोगेन घटवति समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावसत्वात। नच यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तत्सम्बन्धेनावभास्यत्वमित्युक्तौ नैष दोष इति वाच्यं वृक्षे कपिसंयोगस्याध्यस्तत्वापत्तिः तत्कालावच्छेदेन कपिसंयोगवति वृक्षे तत्काल एव तदभावसत्वात्। न चैकवच्छेदेनत्यत्रावच्छेदकत्वं दैशिकमभिप्रेतमिति वाच्यं शुक्तिकायां रजतसंसर्गतदभावयोर्द्देशावच्छेद्यत्वविरहादव्याप्त्यापत्तेः। किञ्च स्वसंसृज्यमान

इति स्वपदमध्यस्तसर्पादिपरं, सत्यसर्पादिपरं, सर्पादि सामान्यपरं वा? नाद्यः अत्र स्वपदेनाध्यस्तसर्पाद्युपादाने स्वाभाववतीत्यत्रापि स्वपदेन तस्यैवोपादेयतया तदभावस्य रज्ज्वादावसम्भवात्। न द्वितीयः, तस्य रज्ज्वादौ संसर्गाभावात्, नान्त्यः अध्यस्तसर्पादेरपि सामान्यान्तर्गततया रज्ज्वादौ तदभावासम्भवात्। नच स्वसंसृज्यमान इति विशेषणमनुपादेयमेव अन्यथाख्यात्यभ्युपगमप्रसङ्गेन स्वसिद्धान्त भङ्गापत्तेः। तस्मादलक्षणं तत्। नच सदसद्भ्यामनिर्व्वाच्यत्वमेवाध्यासलक्षणं तच्च विषयज्ञानाध्याससाधारणमितिवाच्यं तस्यैवासिद्धेः। नह्यनिर्व्वाच्यसर्पादिर्नाम किञ्चिदस्ति अस्ति तु तथाविधं ज्ञानं तदभाववति तत्प्रकारकं स एवाध्यास इति भ्रम इति चोच्यते। नचैवं ज्ञानस्य स्वतःप्रामाण्यहानिप्रसक्तिरिष्टत्वात्। स्वतःप्रामाण्याङ्गीकारे ज्ञानधर्म्मिकप्रामाण्यसंशयानुपपत्तिः। अथ तुष्यत्विति न्यायेन विषयाध्यासस्याभ्युपगमेऽपि ब्रह्मणि प्रपञ्चाध्यासो नोपपद्यते प्रत्यक्षविषय एवाधिष्ठानेऽध्यासस्य स्वीकारात्, नच ब्रह्म प्रत्यक्षविषयो भवति। इति चेन्न अहमिति प्रत्यक्षविषये ब्रह्मणि तत्सम्भवादिति परमतं तत्राह नाहङ्कारास्पद इति आवृत्तिभेदान्नाध्यास इति पदयोः पुनर्लाभः। वृहदधिष्ठानपक्षे यद्देशावच्छेदेनाधिष्ठानस्य परिलुप्तविशेषधर्म्मणः सामान्यतोग्रहस्तदवच्छेदेन विषयाध्यासोऽभ्युपेतव्यः एकस्मिन् देशे रज्जौ चक्षुः सन्निकर्षाद्धर्म्मिग्रहः, अन्यत्र देशे सर्पाध्यास इति नानुभूयते,

अनुभूयते त्वधिष्ठानग्रहसमानदेशत्वं विषयाध्यासस्य। एवञ्च शरीरावच्छेदेनाहङ्कारास्पदे ब्रह्मणि प्रपञ्चाध्यासो युक्तो भवितुं न तु वहिः, भवति च वहिः प्रपञ्चाध्यासः, तस्मादहङ्कारास्पदं नाध्यासाधिष्ठानम्। नचाप्रत्यक्षेऽपि नभसि यथा तल-मलिनताद्यध्यासस्तथा वहिरप्रत्यक्षेऽपि ब्रह्मणि प्रपञ्चाध्यासो भवतीतिवाच्यम् दृष्टान्तासिद्धेः, तथाहि प्रत्यक्षीभूतायामेव ऊर्द्ध्वादिदेशावच्छिन्नायां चन्द्रसूर्य्यनक्षत्रादिप्रभायां तद्वृत्ताव-भावविशेषे वा तलमलिनतादिकं नभस्त्वञ्चाध्यस्यते न पुनर-प्रत्यक्षे नभसि, धर्म्मिगोचरप्रत्यक्षविरहे प्रात्यक्षिकधर्म्माध्यास-स्यानुभवविरुद्धत्वात्। एतदुक्तं नच दृष्ट्यनवच्छिन्न इति। चकारादध्यास इत्यनुषज्यते। एवमुत्तरत्र। ननु प्रत्यक्षीकृते प्रत्यगात्मनि विषयाध्यास इति चेत्तत्राह प्रत्यगिति. यदि प्रत्यगात्मनः साक्षात्कारस्तदाधिष्ठान-साक्षात्कारान्न युज्यते प्रपञ्चात्मकविषयाध्यासस्तस्य तद्बाधकत्वात्। नच रज्वादेर-साक्षात्कारेऽपि सामान्यतो धर्म्मिगोचरप्रत्यक्षे यथा सर्पाद्य-ध्यासस्तथा सामान्यतः प्रत्यक्षविषये स्वप्रकाशे प्रत्यगात्मनि विषयाध्यासो भवतीति वाच्यम् अपरोक्षाध्यासाधिष्ठानत्वस्य वहिरिन्द्रियसन्निकर्षव्याप्यत्वेन प्रत्यगात्मनि तदभावादेवा-परोक्ष-विषयाध्यासासम्भवात्। इदमपि 'नच दृष्ट्यनवच्छिन्ने प्रत्यग्‌दृष्टौ न चेष्यत' इत्यस्य तात्पर्य्यम्। तथाहि दृश्यतेऽने-नेति 'दृष्टि'र्वहिरिन्द्रियसन्निकर्षः, 'तदनवच्छिन्ने' तदभाववति विषयाध्यासः 'न' नास्ति। एतेन अपरोक्षाध्यासाधिष्ठानत्वस्य

सन्निकर्षव्याप्यत्वमुक्तम्। 'प्रत्यक्' प्रत्यगात्मतत्त्वम्'दृष्टौ' इति सप्तम्यर्थ आश्रयत्वं, वहिरिन्द्रियसन्निकर्षाश्रयो नेष्यत इत्यक्षरार्थः। तस्मादसिद्धः प्रपञ्चाध्यास इति। १।

ननु माभूत् प्रपञ्चाध्यासः प्रपञ्चज्ञानाकार एवाध्यासोऽभ्युपेतव्यः स चापरोक्षज्ञानात्मकाखण्ड-नित्यवस्तुनि प्रपञ्च-ज्ञानाकारः, यथाहि स्वप्नदशायां वहिरिन्द्रियासन्निकर्षेऽपि स्रक्सूत्रवदनुस्यूत एकस्मिन् ज्ञाने निद्रादोषोपनीतविचित्र ज्ञानाध्यासो भवति तद्वत्। नचैवमध्यासे सत्यपि प्रपञ्चस्य ततो भेदादद्वैतभङ्गप्रसङ्ग इतिवाच्यं तथाविधज्ञानाध्यास-विषयस्य प्रपञ्चस्यात्यन्तमसत्त्वात्। यत्तु प्रपञ्चस्य नात्यन्तम-सत्त्वं किन्तुत्पत्तिध्वंसवत्तया तस्य पारमार्थिकसत्ताविरहवत्त्वं तेन सदद्वैतसिद्धान्तभङ्गो नास्तीति तन्न अनध्यस्तस्य प्रपञ्च-स्योत्पत्तिस्वीकारे ब्रह्मोपादानकत्वासम्भवात् अध्यासाधिष्ठान-त्वभिन्नोपादानतायां परिणामिमात्रवृत्तित्वनियमात्। न चैवं ज्ञानाध्यासानुपपत्तिः। अध्यासं प्रति वासनाया हेतुत्वात् वासनायाश्चानुभवमूलकत्वात् अनुभवस्य च विषयाधीनत्वात् नहि विषयस्यालीकत्वे तदनुभवः सम्पद्यते नचाननुभूतं वासनया संसृज्यते नापि वासनानुपात्तम् अध्यासविषयो भवति तदेतदध्यासाङ्गीकारेऽपि प्रपञ्चसत्यत्वमास्थेयमिति वाच्यमनादित्वादध्यासवासनानां वीजाङ्कुरवत्कार्य्यकारणप्रवाहा-भ्युपगमात्।

स्यादेतत् यदि वासनाश्रयभेदः स्यात् अन्यथा जागरणस्वप्नादीनां बन्धमोक्षयोर्व्वा व्यवस्था न स्यात्, सर्व्वेषां जागरणादिकं युगपत् स्यात् नस्याद्वेति, यदि तु वासनाश्रयभेदोऽङ्गीक्रियते कोऽसावाश्रय इति वक्तव्यं जीवश्चेदात्मैक्यसिद्धान्तव्याकोपः अथान्तकरणाख्योपाधिकृतो जीवभेदो वास्तवस्तु चैतन्याभेद इति चेदुपाधिनैवाद्वैतसिद्धान्तभङ्गप्रसङ्गः न चोपाधेः सत्यत्वविरहात् सदद्वैतसिद्धान्तो निराबाध इति वाच्यं तस्यासत्यत्वे प्रमाणविरहात् नचोत्पत्तिरेवासत्यत्वसाधिकेति युज्यते वक्तुं ब्रह्मणोऽपरिणामित्वेन द्वितीयस्य चाभावेन तदुत्पत्तेरेवासम्भवात्। इति चेन्न परमेश्वरोपाधिभूताया अध्यासात्मिकाया मूलाविद्याया अन्तःकरणादीनामुत्पत्तेः। यथा हि रज्जौ सर्पज्ञानाद् भयं भवति तद्वत्। अन्तःकरणाध्यासो वा जीवोपाधिः, सच मूलाविद्याप्रभवः। मूलाविद्या चानादिभावरूपा। तस्याः क्षयित्वाच्च न पारमार्थिकसत्ता क्षयित्वञ्चाविद्यात्वेनानुमेयम्। भवन्ति चात्र श्रुतयः, 'सदेव सौम्येदमग्र आसीदित्येकमेवाद्वितीय'मित्याद्याः। इत्येवं प्राप्ते—

अनादिसादी भावौ द्वौ नित्य आद्योऽन्तिमःक्षयी।
न तृतीयः प्रकारोऽस्ति लोकवेदप्रसिद्धितः॥ २।

यद्यनादिभावो मूलाविद्येत्यभ्युपगम्यते तस्या नित्यत्वमवश्यमङ्गीकार्य्यम् अनादिभावस्य नाशासम्भवात् अतएव श्रुतिर्य्यस्य यस्यानित्यत्वं दर्शयति तस्य तस्यैवोत्पत्तिमभिदधाति न च तूलाध्याससाधारणेनाविद्यात्वेन क्षयित्वमनुमेयमिति वाच्यम्

उत्पत्तिमत्त्वस्यापि तथैवानुमानसम्भवात् तत्र क्षयित्वानुमाने सादिभावत्वस्योपाधित्वाच्च । सादित्वे तु तदुत्पत्तिकारणं वाच्यम् ब्रह्मैवेति चेद् भवन्मते तस्य विकारित्वप्रसङ्गः निर्गुणत्व श्रुतिविरोधश्च । अविकृतादसङ्गाच्च ब्रह्मण एव तदुत्पत्तिरितिचेन्मोक्षानुपपत्तिः, तत्राप्यविद्याकारणस्यैकस्य ब्रह्मणः सत्त्वेनाविद्योत्पत्तेरपरिहार्य्यत्वात् । तस्मादनादिः क्षयिणी च मूलाविद्येत्यसङ्गतम् । अनादिभावस्य ध्वंसाप्रतियोगित्वं सादिभावस्य ध्वंसप्रतियोगित्वमिति द्वयं लोकवेदप्रसिद्धम्, आकाशघटाद्यन्तर्भावेण लोकप्रसिद्धिः, आत्मभूतान्तर्भावेण वेदप्रसिद्धिः 'आत्मैवेदमग्र आसी'दिति 'यतो वा इमानि भूतानि जायन्त' इत्यादौ । आकाशनित्यतायां वेदप्रसिद्ध्यप्रसिद्धी तु विचारयिष्येते । तथाच भावो द्विविधः ध्वंसप्रागभावाप्रतियोगी, तदुभय प्रतियोगी च, अन्यविधस्तु भावो नास्तीत्युक्तं न तृतीयः प्रकारोऽस्तीति । अत्र हेतुमाह लोकवेदाप्रसिद्धित इति । ननु भवतु लोकाप्रसिद्धिः वेदाप्रसिद्धिरित्यनुपपन्नम् 'अस्मान् मायी सृजते विश्वमेत'दिति 'य एको वर्णो बहुधा शक्तियोगा'दित्यादिश्रुतिष्वविद्याप्रसिद्धेः । इति चेन्न मायाशक्तिपदयोरद्वैतवाद्युपवर्णिताध्यासपरत्वे मानाभावात् । तत्पदप्रतिपाद्यस्यानादित्वध्वंसप्रतियोगित्वयोरप्रतीतेश्च । यत्तु क्वचिदुक्तं नासद्रूपा न सद्रूपेति तदपि अभावस्वरूपतायाः नित्यस्वरूपतायाश्च प्रतिषेधकम् । तथाच श्रौतं मायाशक्त्यादिपदं प्रायेण अदृष्टपरम्, क्वचिच्छक्तिशब्दः कालादीनां परमात्मप्रयत्नेच्छा-

ज्ञानानाञ्च बोधको भवति। यथा 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेति'। क्वचिच्च साकारस्य परमात्मनो जन्येच्छाविशेषो मायाशब्देन प्रत्याय्यते। 'इन्द्रो मायाभिः पुरुरूप ईयत' इति। अत्रापि मायाशब्दोऽदृष्टार्थो वेत्यन्यदेतदितिदिक्॥ २।

अध्यासासिद्धेरिष्टत्वे दोषमाह

अनध्यस्तस्य सृष्टौ स्याद् ब्रह्मणः परिणामिता।
केवले तु निमित्तत्वे द्वैतसिद्धिरविप्लवा॥ ३।

ब्रह्मणोऽनध्यस्तप्रपञ्चोपादानत्वाभ्युपगमे परिणामित्व-प्रसङ्गः मृदादेरिव घटाद्युपादानत्वेन। अथोपादानत्वं नाङ्गी-क्रियते केवलेन निमित्तकारणत्वेनेव कारणताश्रुतिसिद्धेरिति-चेदायातमस्मत्सिद्धान्तेन, न हि भावकार्य्यमुपादानकारण-मन्तरेण सम्भवति ब्रह्मातिरिक्तस्य च तस्याङ्गीकारे क्वाद्वैत सिद्धिवार्त्ता॥ ३।

नन्वेकविज्ञानात् सर्व्वविज्ञानं छान्दोग्यश्रुतौ प्रतिज्ञातं तच्चैकस्योपादानत्व एव सम्भवति सतश्चापरिणामिनोऽध्यासमन्त-रेण नोपादानत्वमित्यर्थापत्त्यैवाध्याससिद्धिः तस्य स्वरूपमभि-धातुमशक्यमित्यनिर्व्वाच्यत्वमभ्युपगम्यत इति चेद् यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति श्रुतेर्ब्रह्मैवानिर्वाच्यमुच्यतां किमध्यासकल्पनया? ननु ब्रह्म तावल्लक्षणेन निर्व्वक्तुं शक्यते तथाहि 'जन्माद्यस्य यत' इति तल्लक्षणमित्येवं प्राप्त उच्यते

लक्षणं नान्यधर्म्मः स्यात् स्याद्वान्यस्य प्रसञ्जकम्।
अन्यबाधे जगद्बाधान्न किं तदपि बाध्यते॥ ४।

अध्यासवादिनां भवतामिदं न ब्रह्मलक्षणं यतो निर्गुणे ब्रह्मणि जगज्जन्मादि हेतुत्वं नैव घटते, घटते पुनरध्यासाख्याया-मविद्यायामेव। उक्तं हि आनुमानिकाधिकरणभाष्ये "नहि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः। अविद्यात्मिका हि बीजशक्तिरिति"। चम-साधिकरणभाष्ये च "पारमेश्वर्याः शक्तेः समस्तजगद् विधा-यिन्या" इति। न खलु यो धर्म्मो यत्र न युज्यते तस्य तल्लक्षणत्वमुपपन्नमव्याप्तेरित्याह लक्षणं नान्यधर्म्मः स्यादिति नतु शक्तिद्वारा सगुणे ब्रह्मणि परमेश्वरे स्रष्टृत्वमस्ति तस्येदं लक्षणमस्त्वित्यत्राह स्याद्वेति तदप्यविद्यायामतिव्याप्तमित्यर्थः। नहि सा परमार्थसत्त्वेन निर्व्वाच्या भवति क्वातिव्याप्तिरिति चेद् जगतोऽप्येवमनिर्व्वाच्यत्वेन बाधात् तद्घटितलक्षणमप्य-सिद्धमित्याह अन्यबाध इति। अन्यपदमत्राध्यासपरम्। तदपि लक्षणमपीत्यक्षरार्थः॥ ४।

ननु माभूत् तटस्थलक्षणं सत्यादिस्वरूपलक्षणं पुनरस्तीति तदपाकरोति

नास्ति सत्येऽपि सत्यत्वं ज्ञानत्वं ज्ञानगं न वा।
आनन्दत्वं नचानन्दे बाध्यते धर्म्मिधीस्ततः॥ ५।

ज्ञानगं ज्ञानवृत्ति। सत्यत्वज्ञानत्वानन्दत्वादीनां ब्रह्मणि बाधाभ्युपगमात् सत्यादिस्वरूपत्वानुपपत्तिः यत्र यद्धर्म्मस्य

प्रतियोगिव्यधिकरणाभावः स न तद्धर्म्मीति व्याप्त्या ब्रह्मणि सत्यादिभेदसिद्धेः न वा तत्सत्यमितिधीर्भवितुमर्हति प्रतियोगि-व्यधिकरणधर्म्मात्यन्ताभावज्ञानस्य धर्म्मिधीविरोधित्वात्। सत्यत्वाद्यभाव-सत्यादिस्वरूपयोर्व्विरोधात् सत्यत्वाद्यभाववतो ब्रह्मणः स्वरूपलक्षणमनुपपन्नमिति भावः। न च सत्यत्वाद्य-भावो ब्रह्मणि नाभ्युपगम्यते किन्तु सत्यत्वम् इति वाच्यं ब्रह्मणः सधर्म्मकत्वापत्तेः इष्टापत्तौ च द्वैतापत्तिः नच धर्म्मधर्म्मिणोर-भेदः घटो घटत्वमिति प्रतीत्योरिव सत्यत्वं सत्यमितिप्रतीत्यो-र्वैलक्षण्यात् त्वादिप्रत्ययस्य धर्म्मिभिन्नार्थकतायाः शाब्दिकै-रुक्तत्वाच्च। नच सत्यत्वाद्यभावेन धर्म्मिणः सधर्म्मकत्वं तथापि दुर्व्वारमिति वाच्यम् अभावस्य तुच्छतया अधिकरणस्वरूपतया वा पृथग्धर्म्मत्वस्याद्वैतवादिभिरनभ्युपगमात्। अभावरूप-धर्म्मेण सदद्वैतसिद्धान्तभङ्गप्रसङ्गासम्भवाच्च। नच सत्यत्वादिकं सत्येतरव्यावृत्त्याद्यात्मकमभावरूपं तच्च ब्रह्मणि निराबाध-मेवेति वाच्यम् अस्तीत्येवोपलब्धव्य इति श्रौतस्य विधिमुखेना-नुभवस्यापलापापत्तेरन्यथा सर्व्वस्यैवाभावमात्रस्वरूपत्वापत्ति-रितिध्येयम् ॥ ५ ।

अथ ब्रह्म निर्व्वाच्यं भवतु मा वा तेन पुनरध्यासाधिष्ठानेन भवितव्यं—

श्रूयते हि छान्दोग्योपनिषत्सु "उत तमादेशमप्राक्ष्य येना-श्रुतं श्रुतं भवत्यमतंमतम् अविज्ञातं विज्ञातमिति" पित्रापृष्टः श्वेतकेतुराह "कथं नु भगवः स आदेशो भवतीति" ततः पिता

प्रत्याह "यथा सोम्यैकेन मृत्पिण्डेन सर्व्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादि" एतदुपक्रान्तश्रुतिभागेनैकस्योपादानस्य ब्रह्मणो विज्ञानात् सर्व्वविज्ञानमिति गम्यते, दृष्टान्ते मृन्मयोपादानमृत्पिण्डादि-ग्रहणाद्ब्रह्मण उपादानत्वञ्चापरिणामित्वे परिणामित्वानिश्चये वाध्यासाधिष्ठानत्वेनैवेति पूर्व्वपक्षिमतनिरासायोच्यते

श्रुतौ मृदादिदृष्टान्तो न रज्जुः सर्पकारणम्।
नचाधिष्ठानविज्ञाने ज्ञानमध्यस्तगोचरम्॥ ६।

मृदादिरूपं परिणाम्युपादानदृष्टान्तत्वेन श्रुतं न तु सर्पाद्य-ध्यासोपादानं रज्ज्वादि, तथाच यदि दृष्टान्तवलेनोपादान-विज्ञानात्कार्य्यविज्ञानमास्थीयते तद्बलादेव परिणाम्युपादान-विज्ञानात्तथाविधकार्य्यविज्ञानमास्थीयतां न पुनरर्द्धजरतीय-न्यायः। तस्य चानिष्टतया यदि दृष्टान्तदृष्टसर्व्वधर्म्मग्रहणं न रोचते भवद्भ्यो वाढ़म्, एवम् एकविज्ञानात् सर्व्वविज्ञानमात्रं प्रतिज्ञातमित्येव रोचताम्। तच्चास्मन्मते युज्यते—सति हि परमात्मनो योगजप्रत्यक्षे सर्व्वविषयकविज्ञानसम्भवात्। किमनुपलभ्यं नाम योगिभिरिति। नचैवं श्रुतौ मृन्मयस्य विकारता मृदश्च सत्यतेति निर्द्देशो व्यर्थ इति वाच्यं सत्यस्यैकस्य भगवतः परमात्मनो योगजप्रत्यक्षे सति सर्व्वविज्ञानावश्य-म्भावस्य दृष्टान्तेन प्रतिपादनाय तथा निर्द्देशात्, नापि तत्रत्येषु सर्व्वत्र दृष्टान्तेषूपादानग्रहणं, तथाहि "यथैकेन नखनिकृन्तनेन सर्व्वं कार्ष्णायसं विज्ञातं भवतीति," न खलु

नखनिकृन्तनं वास्यादीनां कार्ष्णायसानामुपादानत्वमापद्यते, एवञ्च तज्ज्ञानं सामान्यलक्षणसन्निकर्षद्वारा कार्ष्णायसत्वेन रूपेण सर्व्वस्य कार्ष्णायसस्य ज्ञानं प्रति यथा हेतुर्भवति तथैव परमात्मप्रत्यक्षं योगप्रकर्षद्वारा सर्व्वविज्ञाने हेतुर्भवतीति प्रतीतेरौचित्याच्च। यद्येकस्य कस्यचिज्जड़स्य विज्ञानाद्बहुविधतद्विकारतत्प्रकृतिविकारविज्ञानमित्यनुभूयते तदैकेश्वरविज्ञानाद्बहुविज्ञानवार्त्तायां नाश्रद्दधानेन भवितव्यमित्यनुशासनार्थः। प्रकृतिविकृतिग्रहणात्तु दृष्टान्तस्यायौक्तिकत्वनिरासाय। अन्यथा भवतामिवैकविज्ञानात् सर्व्वविज्ञानमिति प्रतिज्ञा हीयेत। न हि सर्पाधिष्ठानरज्जुविज्ञानात् सर्पविज्ञानं भवति, किं तर्हि विनश्यत्येवेति। प्रागनुभूतसर्पो हि पुरुषो रज्जुगताज्ञानमहिम्ना तत्सन्निकृष्टेन्द्रियोऽपि सादृश्यज्ञानसमुद्बुद्धसर्पसंस्कारः सर्प इत्यवगच्छति रज्जुम्। तत्र यदि रज्जुतत्त्वविज्ञानं ततः सर्पज्ञानमपगच्छति, न पुनः सर्पविज्ञानमुत्पद्यते। प्रागननुभूतसर्पस्तु रज्जुगताज्ञानदुष्टोऽपि न तां सर्पत्वेनावगच्छति। इतीममर्थमभिसन्धायोक्तं "नचाधिष्ठानविज्ञाने ज्ञानमध्यस्तगोचर"मिति। न ह्युपजातरज्जुतत्त्वज्ञानः सर्पज्ञानमधिगच्छतीत्यर्थः। नन्वेवमद्वैतश्रुतीनां का गतिरित्यत्राह—

द्वैतश्रुतीनां सर्व्वासां भ्रमालम्बत्वकल्पने।
मुख्यबाधप्रसक्तिःस्यादीश्वरोऽनीश्वरस्तथा ॥ ७ ॥

कर्म्मकाण्डोपयोगिन्यश्चान्याश्च "द्वा सुपर्णा सयुजा सखाया," "रसं ह्येवायं लब्ध्वानन्दी भवती"त्याद्याबहुविधा द्वैतश्रुतयश्चेद-

परमार्थोपदेशिन्यः कल्पेरंस्तदा भवतां मुख्यस्याद्वैततत्त्वस्याप्यप्रामाणिकत्वेन बाधप्रसक्तिः, तत्प्रमाणीभूतश्रुतीनां श्रुतित्वाविशेषादपरमार्थोपदेशित्वशङ्कया कलङ्कितत्वात्। एवमीश्वरस्याप्यनीश्वरत्वापत्तिरीशितव्याभात्। व्यावहारिकदशामात्रीयं द्वैतमितिचेद् ध्यानदशामात्रीयमद्वैतमित्येव किं न रोचयेः। तथाच बाह्यार्थापलापिनां विज्ञानवादिनां मतं यथा ह्यनुभवविरोधाद्भाष्यकृद्भिः खण्डितं तथैवानुभवविरोधे सत्यपि बलवत्यद्वैतसाधनप्रयासस्तेषामाशयविशेषमभिव्यञ्जयति स चास्माभिरुट्टङ्कितपूर्व्वः, विवेचितप्रायाश्चास्माभिराद्ययष्टौ द्वैताद्वैतश्रुतयोऽत्र चिन्तनीया धीमद्भिरित्यनवद्यम् ॥ ७ ॥

इति श्रीगौतमसिद्धकुलोद्भव-नानादर्शनपरमाचार्य्य-श्रीमत् पञ्चानन-तर्करत्न-भट्टाचार्य्य-कृतायां द्वैतोक्तिरत्नमालायामध्यास निरासाख्या तृतीया यष्टिः।

---

## अथ चतुर्थी यष्टिः।

एतावता प्रबन्धेन यत् प्रतिपादितं तदाचार्य्यमतविरुद्धत्वेनानुपादेयमित्याग्रहवतां भ्रान्तानामाचार्य्यवचसि विरोधादिदोषप्रदर्शनेनाप्रामाण्यग्रहमुपजनयितुमुक्तावशिष्टदोषाशङ्कामुपशमयितुञ्च सूत्रार्थनिरासप्रधाना चतुर्थी यष्टिरारभ्यते,—

ज्ञानस्य वस्तुतन्त्रत्वं वस्तुनि ज्ञानतन्त्रताम्।
ब्रुवाणो भाष्यसन्दर्भो मिथो व्याहन्यतेतराम्॥ १॥

उक्तं हि जन्माद्यधिकरणे भाष्यकृता "वस्तुयाथात्म्यज्ञानं न पुरुषबुद्ध्यपेक्षम्, किं तर्हि वस्तुतन्त्रमेव तत्। तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव भूतवस्तुविषयत्वात्।" एतेन प्रमाया वस्तुसत्ताधीनत्वमावेदितम्। देवताधिकरणे तु 'प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणमिति' एतेन वस्तुसत्तायाः प्रत्ययाधीनत्वमावेद्यते, नचैवमन्योन्याधीनत्वं सम्भवतीतरेतराश्रयप्रसङ्गात्। न च देवताधिकरणोक्तिरेकदेशिमतानुवाद इति विरोधेऽपि क्षत्यभाव इति वाच्यं तदंशे विरोधस्य स्वसिद्धान्तप्रकटनावसरेऽप्यनाविष्कृततयैवाप्रतिषिद्धमनुमतमितिन्यायेन स्वसिद्धान्तीकृतत्वात्। तथाच विरुद्धार्थप्रकाशकौ भाष्यांशावन्योन्यमत्यन्तं व्याहन्येते। यदुक्तं 'याथात्म्यज्ञानं न पुरुषबुद्ध्यपेक्ष'मेतदेवायुक्तं तथाहि पुरुषबुद्धिरिति पुरुषान्तःकरणं वा पुरुषज्ञानं वा द्वयमेव वस्तुयाथात्म्यज्ञानं प्रत्युपयुज्यते, असत्यन्तःकरणसम्बन्धे विशेषण-

ज्ञाने च विशिष्टज्ञानानुत्पत्तेः। यदि वस्तुतन्त्रमेव याथात्म्यज्ञानं सुषुप्तानामपि पुरुषाणां सकलयाथात्म्यज्ञानप्रसङ्गात्। वस्तूनामविशेषेण सत्त्वात्। यच्चोक्तं 'प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारण'मिति तदप्ययुक्तमप्रतीतस्याप्यारण्यकुसुमादेः सत्त्वात्, अन्यथा विज्ञानवादानुप्रवेशप्रसङ्गात्। सत्यपि प्रत्येकं व्याघाते द्वयोरुक्त्योर्व्याघातादाधिक्यमित्युक्तं व्याहन्यततरामिति। तथाच भाष्यमप्रमाणमयुक्तवाक्यघटितत्वाद्विरुद्धार्थकवाक्यघटितत्वाद्वा मत्तोन्मत्तवाक्यवदित्यप्रामाण्यसिद्धिः। एवमुत्तरत्र ॥ १ ॥

ननु यथातथास्तु भाष्यं, आरोपोपसनाद्यर्थमात्मैक्यमाम्नातमिति यदुच्यते श्रीमद्भिः, तदसम्भवेन श्रुतिबलादेवाद्वैतसिद्धिर्भविष्यति, कथं तदसम्भव इति चेदाह द्विविधो ह्यारोपः सम्पदसम्पच्च तत्र नेदं ब्रह्मात्मैकत्वविज्ञानं सम्पद्रूपं यथा "अनन्तं वै मनोऽनन्ता विश्वेदेवा" इति न चासम्पद्रूपं यथा "मनो ब्रह्मे"त्युपासीतेति तथात्वे "तत्त्वमसि" "ब्रह्मास्मी"त्यादिवाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन्। "ब्रह्मवेद ब्रह्मैव भवतीति" चैवमादीनि न सामञ्जस्येनोपपद्येरन्निति चेन्न—तत्त्वमसीत्यादि वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादने तात्पर्य्यस्यैवासिद्धेः। तत्त्वमसीत्याद्यभेदबोधकविभक्तिबलेन चेत् तथा कल्प्यते आदित्यो यूप इत्यादावप्यभेदः स्यात्। परमात्मगोचर-

योगजप्रत्यक्षस्याविद्यानिवृत्तिफलकत्वेऽपि तदैक्यदर्शनस्यानुप-योगात् प्रत्युत भेददर्शनस्यैवोपयोगाच्च, तथाहि "यः सर्व्वज्ञः सर्व्वविद् यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय। तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति॥ भिद्यन्ते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे॥" (मुण्डकोपनिषत्सु द्वितीयमुण्डकीया श्रुतिः।) इति क्रमिकाः मन्त्राः, सर्व्वज्ञः सर्व्वविद् इत्यनेन च द्वैतनिर्द्देशः न ह्यद्वैततत्त्वे प्रतिपि-पादयिषिते सर्व्वज्ञ इत्यादि ज्ञानविषयतया द्वैताधीनं सर्व्वत्वम-भिधीयेत, एष आत्मा दिव्ये ब्रह्मपुरे व्योम्नि प्रतिष्ठितः। इत्याधाराधेयोपदेशश्च न स्यात्। मनोमयः प्राणशरीरनेतेत्यत्र परिपश्यन्तीति पञ्चमो लकारः, द्रष्टव्य इत्येकवाक्यत्वात्, तथाच तथाविधविधौ मनोमयः प्राणशरीरनेत्यादि प्रकारेण पर-मात्मदर्शनमपि नाद्वैतदर्शनं भवति, किन्तु प्राणादिभेदेन द्वैत दर्शनं तत्फलञ्च—भिद्यते हृदयग्रन्थिरित्यादि। यद्येवम् अविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन्नित्युक्तिरसङ्गतैव। क्वचि-दभेददर्शनं तु रागद्वेषप्रशमनद्वारा मुक्त्युपयोगितया उपासना-रूपतया विहितमित्याद्यवोचाम।

अथ परिपश्यन्तीति न विधिवाक्यं किन्तु भूतार्थवादः, द्रष्टव्य इत्यादीन्यपि वचनानि न विधिपराणि किन्तु भूतार्थ-वादरूपाणि। अत्र परिदर्शनञ्च ब्रह्मात्मैक्यसाक्षात्कारः,

आधारनिर्द्देशस्य कयाचिदेव विवक्षयेति चेत्—"परिपश्यन्ति" "द्रष्टव्य" इत्यादौ श्रुताख्यातार्थपरित्यागात्, अश्रुतब्रह्मात्मैकत्वपरिकल्पनाच्च न लञ्जस इत्यहो भवतो वैदग्धी। शिष्टं पुनरूहनीयम् ॥ १ ॥

अथ ज्ञानस्य कार्य्यत्वाभावात् परिपश्यन्तीत्यादेर्नैविधित्वसम्भवः कार्य्यताया एव विधित्वादिति प्राप्त उच्यते—

इच्छा यदि लिङर्थः स्यादिष्टसाधनताथवा।
युज्यन्ते दर्शनादीनां विधयस्त्वात्मगोचराः ॥ २ ॥

इच्छा—आप्ताभिप्रायः, इष्टसाधनत्वं वात्र विध्यर्थः, तथाच आत्मदर्शनादिकम् आप्ताभिप्रायविषय इष्टसाधनं वेति तदर्थः।

यद्वा, इष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वस्याप्युपलक्षकं, तद्द्वयमेव खण्डशो लिङर्थः। तद्द्वयञ्चैकत्र द्वयमितिरीत्या दर्शनाद्यन्वयि। कार्य्यताया विध्यर्थत्वेऽपि बाधादेवात्र न तदन्वयः। दर्शनाद्युपाये तु कार्य्यत्वादिसम्भवेन प्रवृत्त्युपपत्तेः। तथाच दर्शनादिविधौ ब्रह्मणोऽन्वयः सम्भवति। एतेन विध्यनन्वितत्वेनोपनिषदां प्रामाण्यं नास्तीत्याक्षेपः परिहृतः।

अथ "अन्यदेव तद्विदितादथो अविदितादधि" इत्यादि श्रुत्या विदिक्रियाकर्म्मत्वप्रतिषेधाद् दृश्यादिविध्यन्वयासम्भव इति चेन्न—योगविशेषजप्रत्यक्षातिरिक्तप्रत्यक्षाविषयत्वस्य विदितादन्यदित्यनेन योगविशेषजप्रत्यक्षविषयत्वस्य अविदितादधीत्यनेन बोधनात्, अतएव 'यन्मनसा न मनुते' इति 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मये'ति द्वयोरविरोधः 'येनेदं

सर्व्वं विजानाति तं केन विजानीया'दित्यपि योगविशेषातिरिक्तज्ञानसाधनेन विशेषतो ज्ञानं प्रतिषेधति। उपासीतेत्याकारकविधावपि ब्रह्मणो भवत्यन्वयः, न च "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इत्युपास्तिकर्म्मताप्रतिषेधाद्ब्रह्मणस्तत्रान्वयासम्भव इति वाच्यम्, तथाविधश्रुतेः 'यदिदमुपासत' इत्यत्रेदमा निर्द्दिष्टस्य प्रत्यक्षविषयस्योपास्तिकर्म्मणो ब्रह्मणि भेदप्रतिपादनपरत्वात् प्रत्यक्षविषयीभूतमुपास्तिकर्म्म च स्रक्चन्दनादि। अतएव "तज्जलानिति शान्त उपासीत"तत्राद्याः श्रुतयो यथायथं सङ्गच्छन्ते। न चैवं मोक्षस्यात्मदर्शनफलत्वेऽनित्यत्वापत्तिः, इष्टापत्तौ मुक्तस्यापि मोक्षनाशात् संसारित्वप्रसङ्गः। नित्यत्वे फलत्वानुपपत्तिः, प्रागप्यात्मदर्शनात् तत्सिद्धेरिति वाच्यं, अभावात्मकफलस्य नाशासम्भवात् चरमदुःखध्वंसो हि मोक्षो जन्यस्यापि तस्य ध्वंसो नास्तीति। स च मोक्षः परमात्मदर्शनादिजन्येन अदृष्टविशेषेण जनितेन योगविशेषजनितेन वा देहादिव्यतिरिक्त जीवात्मसाक्षात्कारेण अहं गौर इत्यादि मिथ्याज्ञाननिवृत्तिपरम्परया भवतीति परमात्मदर्शनादिविधयः स्वरूपतो वा फलतो वा न प्रतिषेद्धुं शक्यन्ते। तदुक्तं युज्यन्त इत्यादि। तथाच विधित्वादिनिरासकभाष्यजातमप्रमाणम् ॥ २ ॥

जीवो वा ब्रह्म वाप्यास्तामानन्दमयशब्दभाक्।
विचारितेन किं तेन द्वैतस्याभाव निश्चये ॥ ३ ॥

यद्यद्वैतं तत्त्वमिति सिद्धान्तः—आनन्दमयाधिकरणमनर्थ-

कम्। जीवस्य ब्रह्मणश्चैक्येनानन्दमयशब्दो जीवं ब्रह्म वा बोधयतु, तत एवाभिमतसिद्धेरप्रत्यूहत्वात्। न चोपाध्यवच्छिन्नानवच्छिन्नत्व प्रयुक्तकाल्पनिकभेदमूलकोऽयं विचारः, परमार्थोपदेशिन्यां श्रुतौ काल्पनिकभेदमूलकविचारावतारणानौचित्यात्। तस्मादपार्थकमिदं भाष्यजातम्। एतेन जीवब्रह्मसंशयघटितमधिकरणान्तरमप्युपलक्षणीयमिति ध्येयम् ॥३॥

ननु 'यदेवेह तदमुत्र' 'नेह नानास्ति किञ्चने'त्यादि श्रुतयो द्वैतबाधिका इत्यत्रोच्यते—

नानात्वप्रतिषेधी हि श्रुतौ स्थैर्य्योपपादकः।
जीववद्बाह्यवस्तूनां नाद्वैतस्य प्रसिद्धये ॥ ४ ॥

"यदेवेह तदमुत्रेति" देहात्मवादिनां सर्व्वक्षणिकत्ववादिनाञ्च मतनिरासाय "यदेवेहेति" "नेह नानास्ती"त्यादिश्रुतिप्रवृत्तिः। प्रतिपादितार्था चेयमधस्तात्। तस्मादेतच्छ्रुतिबलाद् द्वैत निरासपरं भाष्यजातमसङ्गतम्।

एवं सांख्यमतनिरसनाय प्रयुक्ता युक्तयोऽपि न सर्व्वत्र विचारसहास्तथा च तत्तदंशे तावदप्रामाण्यं भाष्यस्येति द्वाभ्यामुच्यते—

अव्यक्तं प्रकृतिः स्थूलशरीरं वेति संशये।
काठके प्रकृतिर्युक्ता, महतः स्थूलता तथा ॥ ५ ॥

यो वै सगरपुत्त्राणां प्रतप्ता कपिलो मुनिः।
वासुदेवांशसम्भूतस्तेन सांख्यं प्रवर्त्तितम् ॥ ६ ॥

'इन्द्रियेभ्यः परा ह्यर्था' इत्यादि'रव्यक्तात् पुरुषः पर'इत्यन्ता काठकश्रुतिर्व्याख्याता। तत्राव्यक्तशब्दः प्रकृतिपर इति सांख्याः, स्थूलशरीरपर इति भाष्यकृतः। तत्र स्थूलशरीरपर इति प्राप्तं कुतः? 'आत्मानं रथिनं विद्धि शरीरं रथमेवत्वि'त्याद्यनन्तरोक्तरूपकविन्यासगृहीतस्थूलशरीरेतरसकलवस्तुवोधकेऽस्मिन् मन्त्रे सन्दिग्धार्थकेनाव्यक्तशब्देन स्थूलशरीरवोधनस्यैव युक्तत्वात्। एवं प्राप्त उच्यते, नैतद् युक्तं तन्मन्त्रघटकेन महान् आत्मेत्यनेनैव स्थूलशरीरस्य वोधनादाकाङ्क्षानिवृत्तेः, पञ्चमवल्लीस्थाव्यक्तपदस्य स्थूलशरीरपरत्वाभ्युपगमे साधकाभावात्, अव्यक्तपदस्य परम-व्यक्तपरत्वानौचित्याच्च। नच महानात्मेति समष्टिबुद्धिवोधकमिति वाच्यं, समष्टिव्यष्टिभेदस्य सर्व्वत्र साम्येऽप्येकत्र तद्भेदप्रतिपादनेऽन्यत्र चोपेक्षणे सन्दर्भविरोधात्। नन्वेवं नैयायिकमतविरोधो दुर्व्वार इति चेदव्यक्तशब्दस्य स्थूलशरीरपरत्वाभावे, महानात्मेत्यस्य समष्टिबुद्धिपरत्वाभावे च सांख्यनैयायिकयोरविरोधाददोषः। वस्तुतः प्रकृत्यादिपदार्थगोचरविरोधस्तावदधिकारिभेदानुवन्धेन परिहर्त्तव्यः। अतएवोक्तं श्रीभागवते—

'इति नाना प्रसंख्यानं तत्त्वानामृषिभिः कृतम्।
सर्व्वं न्याय्यं युक्तिमत्त्वाद् विदुषां किमशोभनम्॥' इति।

श्रुतिपरिगीतमहिमा परमकारुणिको भगवान् कपिलो मुनिर्यदुपदिदेश तत्प्रमाणमिति सांख्यसिद्धान्ते श्रद्धातिशयं दूरीकर्त्तुमुक्तं च भाष्यकारैः, 'अन्यस्य च कपिलस्य सगरपुत्राणां

प्रतप्तुर्व्वासुदेवनाम्नः स्मरणादिति' तदपि न युक्तं, सांख्यमत-वक्तुः कपिलस्यैव भगवदवतारत्व-सगरसुत-प्रतप्तृत्वस्मरणात्— तथाहि श्रीभागवते—

'प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके।
एष वाजिहरश्चौर आस्ते मीलितलोचनः॥
हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः।
उदायुधा अभिययुरुन्मिमेष तदा मुनिः॥
स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः।
महद्व्यतिक्रमहता भस्मसादभवन् क्षणात्॥
यस्येरिता सांख्यमयी दृढ़ेह नौ-
र्यया मुमुक्षुस्तरते दुरत्यय'मिति।
'कपिलस्तत्त्वसंख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥' इति

च। तस्मात् प्रदर्शितभाष्यमप्रमाणम्। ५।६।

अथ कार्य्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म, तस्मात्कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्य्यस्य, तथाहि श्रुतिरेव तस्करदृष्टान्तेनानृताभिसन्धस्य बन्धनं सत्याभि-सन्धस्य च मोक्षं दर्शयन्त्येकत्वमेव पारमार्थिकं दर्शयति मिथ्या-ज्ञानविजृम्भितञ्च नानात्वमित्यावेदयद् भाष्यमप्रमाणमित्याह—

सदसद्ग्राम्यनिर्व्वाच्ये सदनन्यत्वसाधनम्।
व्याहतं बुद्धिभेदाच्च मीमांसा दुष्टकल्पना॥ ७।

सदसद्भ्यामनिर्व्वाच्यं खलु जगदित्यद्वैतवादिमतं तत्र सद-

नन्यत्वसाधनं नोपपद्यते, तद्यासत्यनिर्व्वाच्यत्वव्याघातः। अथा-सदित्यद्वैतवादिमतं तत्राप्यसति सदनन्यत्वसाधनं तथैव, सद-सतोस्तादात्म्यासम्भवात्। बुद्धिभेदमाश्रित्य मीमांसा च दुष्ट-कल्पनैवेति यथाश्रुतार्थः। तदुपव्याख्यानञ्च तस्करदृष्टान्तेना-नृताभिसन्धस्य बन्धनमित्यादि यदुक्तं तेन देहाद्यनात्मन्यात्मत्व-बुद्धेरेवानृताभिसन्धानत्वेन देहाद्यतिरिक्तस्य नित्यस्य चेतनस्या-त्मत्वबुद्धेश्च सत्याभिसन्धानत्वेन प्रतिपादनान्न द्वैतबाधः श्रौतः। कार्य्यस्य कारणानन्यत्वमिति यदुक्तं तदपि नोपपद्यते विकल्पा-सहत्वात्। तथाहि किमिदमनन्यत्वमभेदो वा भेदप्रतिषेधो वा साजात्यं वा वैजात्यप्रतिषेधो वा तत्सत्ताधीनसत्ताकत्वं वा तदविषयकप्रतीत्यविषयत्वं वा तादात्म्येन तद्व्याप्यत्वं वा? नाद्यः, सदसद्भ्यामनिर्व्वाच्यस्य कार्य्यस्य पारमार्थिकसत्स्व-रूपात्कारणादभेदासम्भवात्। तत्स्वीकारे कार्य्यस्यापि पारमा-र्थिकसत्त्वं स्यात्, अनिर्व्वाच्यत्वं वा कारणस्य स्यादभिन्नस्यैक-धर्म्मकत्वनियमात्। न द्वितीयः, सिद्ध्यसिद्धिभ्यां व्याघातात्, यदि तत्र भेदस्तत्प्रतिषेधो नोपपद्यते, यदि त्वभेदः पूर्व्वदोष-तादवस्थ्यम्, व्यावहारिकभेदप्रतिषेधः स इति चेत् तस्यैवा-सिद्धेः व्यावहारिकत्वादिना वस्तुविकल्पस्य वाङ्मात्रत्वात्, नच भेदभ्रमप्रतिषेधः स इति साम्प्रतम् तत्र भ्रमत्वस्याद्याप्यनव-धारणात्। न तृतीयः, ब्रह्मणि परेषां भावरूपधर्म्मानभ्युप-गमात्, ब्रह्मवृत्तेरभावात्मकधर्म्मस्य कार्य्येष्वनभ्युपगमात्, साजात्यस्य भेदाधीनत्वाच्च। जगद्ब्रह्मसाधारणयत्किञ्चि-

र्म्ममङ्गीकृत्य तेन साजात्याभ्युपगमे तु न द्वैतबाधः, प्रमेयत्वेन धर्म्मेण सर्व्वेषां साजात्यस्य द्वैतवादिभिरप्यभ्युपगमात्। धर्म्मान्तरेण साजात्येऽप्यद्वैतसिद्ध्यभावाच्च घटशरावादीनां सत्यपि पृथिवीत्वेन साजात्ये व्यक्तिभेदस्यापलपितुमशक्यत्वात्। न चतुर्थः, चेतनविलक्षणस्य जड़स्य कार्य्यजातस्य ब्रह्मवैजात्यप्रतिषेधासम्भवात्। न पञ्चमः, ईदृगनन्यत्वस्य द्वैतबाधकताविरहेन प्रकृतानुपयोगात् विशिष्टधूमे वह्निभिन्नत्वेऽपि वह्निसत्ताधीनसत्ताकतया निरुक्तानन्यत्वस्य सत्त्वात्। न षष्ठः, तदविषयकप्रतीतेः सत्त्वासत्त्वाभ्यां व्याघातात्। तदविषयकप्रतीतिसत्त्वे तद्विषयत्वं यत्र क्वचिदभ्युपगन्तव्यं तत्रैवानन्यत्वासिद्धेः, तदसत्वे च प्रतियोग्यप्रसिद्धेः। नान्त्यः, तादात्म्येन व्याप्यस्य व्यापकस्वाभाव्यनियमेनान्योन्यविरुद्धस्वभावयोर्ज्जड़चेतनयोस्तादात्म्येन व्याप्यव्यापकभावासम्भवात्। नन्वेवं 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'-मित्यादिश्रुत्या भेदो बाधित इति चेदत्र श्रुत्यर्थः परिष्क्रियते, तथाहि आरम्भणं विकारो वाचा नामधेयमित्यन्वयः, तत्र आरम्भणमेव विकारः, नतु परिणामो विवर्त्तो वा नन्वेवमुत्पत्स्यते तद्घट इति प्रयोगो न स्यात् आरम्भात् प्राक् तद्घटस्यासत्त्वात् असति च धर्म्मिणि भविष्यदुत्पत्तिकत्वस्य वर्त्तमानप्रागभावप्रतियोगित्वस्य वा सतो धर्म्मस्य सम्बन्धाभावेन योग्यताविरहादित्याशङ्कापनयनाय 'वाचा नामधेय'मिति नामधेयं तु वाक्स्वरूपं न तु नामतदर्थयोरभेदः येनार्थासत्त्वे नामाप्य-

सत् स्यात् तथाच तद्घटासत्त्वेऽपि तन्नामसत्त्वात् नामार्थं बुद्धावारोप्य उत्पत्स्यत इति प्रयोगसम्भवात्, अतीतानागतयोरपि विषयितया ज्ञाने सत्त्वात्। नन्वेवमसन् घटइति प्रत्यक्षं न स्यात् इष्टत्वात् तत्र घटाभावस्यैव प्रत्यक्षात्। नन्वेवमप्यारम्भपक्षे एकविज्ञानात् सर्व्वविज्ञानमित्याद्यनुपपन्नमदृष्टत्वादिति चेन्न एकत्र गृहीतया पृथिवीत्वादिजात्या सामान्यलक्षणप्रत्यासत्त्या सकलपार्थिवज्ञानमित्येकविज्ञानेन तज्जातीयसर्व्वविज्ञानस्य दृष्टत्वात्। तद् यथैकविषयकप्रत्यक्षजप्रत्यक्षमसन्निकृष्टनानार्थविषयकं तथैकेश्वरप्रत्यक्षजप्रत्यक्षमप्यसन्निकृष्टनानार्थविषयकं भविष्यत्यलौकिकसन्निकर्षजन्यत्वात्। यथाहि समान्यलक्षणसन्निकर्षेणासन्निकृष्टार्थविषयकज्ञानमनुभवसिद्धं ते तथेश्वरप्रत्यक्षात्मकेन तद्धेतुना वा योगजसन्निकर्षेणापि भवति श्वेतकेतो! इति भावः। नन्वेवमप्यारम्भपक्षो न घटतेऽनवस्थाप्रसङ्गात् घटादिविकारारम्भस्य विश्रामाभावादितिशङ्कापनयनाय 'मृत्तिकेत्येव सत्यम्' इति पृथिव्येव सत्यभूतास्ति, सा च परमाणुलक्षणा तत्रैव विश्रामसम्भवात्। नन्वत्रैकविज्ञानात् सर्व्वविज्ञानोपपत्त्यर्थमारम्भवादविवेचनमप्रासङ्गिकमिति वाच्यम् एकविज्ञानात् सर्व्वविज्ञानमित्युपदेशेनारम्भवादी भ्रान्त इति श्वेतकेतोर्भ्रमो माभून्मा चारम्भवादपक्षे एकविज्ञानात् सर्व्वविज्ञानानुपपत्तिरिति भ्रम इत्येतद्भ्रमद्वयनिरासार्थकत्वेन प्रासङ्गिकत्वात्।

ईश्वर एव जीवः स एवेदं सर्व्वमित्याकारकारोपध्यानेन

सार्व्वज्ञ्यहेतुभूतो योगः सुसम्पद्यते इति समुदितार्थकमिदं प्रकरणमन्यथैकविज्ञानेन सर्व्वविज्ञानमिति प्रतिज्ञैव व्याकुप्येत, सत्याधिष्ठानज्ञानस्य मिथ्यासर्पादिज्ञानाजनकत्वादित्यवोचाम। नचैवं "यदग्ने रोहितं रूपं तत्तेजसः यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्" इत्याद्युक्तुं तनश्रुतेरसङ्गतिरिति वाच्यम् यतस्तत्रापि स्थूलोऽयमग्निरारब्ध एव कश्चिद् विकारः तत्र किञ्चिदारम्भकं किञ्चिच्चोपष्टम्भकमित्यारम्भकोपष्टम्भकयोर्व्विश्लेषणे तत्रोपलब्धपूर्व्वमग्नित्वं नोपलभ्यतेऽवयविनो विनाशात् तथाचारम्भवाद एव पर्य्यवसन्नः। तस्याग्नेर्विनाशेऽपि न तस्य नामनाशः, नामार्थयोर्भेदादुपष्टम्भकोपष्टभ्ययोः सुतरां भेदाच्च। नचावयवस्य उपष्टम्भकस्य वा नाशः अवयवावयविनोर्भेदात्। यदि परिणामवादोऽभिप्रेतः स्यात् "अपागादग्नेरग्नित्वम्" इति न स्यात्, कारणावस्थया तस्य विद्यमानत्वसम्भवात्। नापि वादान्तरम्, तथाविधाग्नित्वनिवृत्तौ तन्मते ज्ञानस्यैवोपयोगादग्नेरग्नित्वमित्युक्तेरसङ्गतत्वाच्च। नहि कश्चिद् रज्जौ सर्पबुद्धिं निरसितुं रज्जुरियमित्यपागात् सर्पस्य सर्पत्वमिति प्रयुङ्क्ते। प्रयुङ्क्ते तु रज्जुरियं न सर्प इति वा रज्जुरियमित्यपागाद् रज्जोः सर्पत्वमिति वा। अतएव यदग्ने रोहितं रूपमित्यादिवचनमग्नित्वाध्यासनिवर्त्तकज्ञानार्थकमित्युक्तावपि न निस्तारः। "अपागादग्नेरग्नित्व"मित्यस्य वस्तुतो यदग्निवृत्तरग्नित्वं तस्यैवाश्रय-

नाशादसम्बन्ध इति तात्पर्य्यं भवितुं युक्तं तच्चारम्भवादपक्ष एव घटते, अन्यत्र तु ज्ञानाकाराग्नित्वम्, अनिर्व्वाच्याग्नित्वमसदग्नित्वं वा भवति, तत्राग्नेरग्नित्वमिति निश्चितसम्बन्धिपदं नाञ्जस्येनोपपद्यते। एवमुत्तरत्र। सर्व्वेषामेवावयविनामेका रीतिरित्यावेदनाय पौनःपुन्येनोक्तिः। पार्थिवावयविनि जलस्य जलावयविनि तेजसश्च निमित्तकारणतया धूमेन वह्नेरिव कार्य्यलिङ्गकं कारणानुमानम्। प्रत्यक्षस्य सकलजलतेजोवृत्तित्वविरहादनुमानपर्य्यन्तापेक्षा। तेजसा चेश्वरस्य निमित्तकारणस्यानुमानमेवमनुमितस्येश्वरस्य सर्व्वात्मकत्वमनुध्यायतो जीवे च तादात्म्यमारोपयतो यः खलु योगी भवति स परमतामापन्नो निखिलतत्वमुद्भासयति जनयति च मोक्षमिति। एष छान्दोग्यषष्ठप्रपाठकार्थः स्पष्टीकृतः। तस्मात् कार्य्येषु सदनन्यत्वसाधनं व्याहतम्। किञ्च यदि कार्य्यकारणयोरनन्यत्वं, व्यवहार-विलोपः स्याद् घटपटयोर्मृदनतिरेकाद् घटार्थी पटमपि चिकीर्षेत् पटार्थी वा घटमिति नैव वा किञ्चिच्चिकीर्षेन्मृद एव विद्यमानत्वात्। पटमानयेत्युक्ते घटं घटमानयेत्युक्ते वा पटं सर्व्वत्रैव मृदं वेति विशेषाध्यवसायाभावात्। यद्यभ्युपगम्यते विशेषः, कथं नाम कार्य्यकारणयोरनन्यत्वं? वस्तुभेदस्य विशेषव्यापकत्वात् नचावस्थाभेदरूपे सत्यपि विशेषे वस्त्वनन्यत्वं शयनासनाभ्यामिव देवदत्तस्येति वाच्यं स्वरूपविशेषस्यैव वस्तुभेदकत्वाद् घटपटादेश्च स्वरूपविशेषस्यैवाभ्युपगम्यत्वात्। नच मृद एवावस्थाभेदा

घटपटादय इति वाच्यं विकल्पासहत्वात्। अवस्था हि मृदोऽतिरिच्यते न वा? अतिरिच्यतेचेदनन्यत्ववार्त्ता परित्यज्यताम् नातिरिच्यते चेत् कस्तद्भेदः, न च कूर्म्मतस्तदङ्गानामिव कारणतः सतामिव कार्य्याणामाविर्भावस्तत्र च तिरोभाव इति युक्तं घटशरावपटादीनां नानाकार्य्याणामिव मृदि सत्त्वादेकेन कारकव्यापारेण कार्य्याविर्भावयौगपद्यापत्तेः, संहितेषूणामिव धनुषः। अथ विशेष्यैव कारकव्यापाराणां पृथक् कार्य्याविर्भावहेतुत्वं कल्प्यते चेत् तथाप्यनन्तघटस्वरूपाया मृदो युगपत् सर्व्वघटाविर्भावप्रसङ्गः कारकव्यापारस्य समानत्वात्। नच तद्व्यापारव्यक्तिस्तद्घटव्यक्त्याविर्भावे कारणं कल्पनीयमिति वाच्यं तद्घटैतद्घटयोरनन्यत्वेन तथा कल्पनासम्भवात्। फलवैजात्याच्च नानन्यत्वं, तन्तुभिः सीव्यते न प्राव्रियते, पटेन च प्राव्रियते न सीव्यते इत्यन्योन्य फलवैजात्येन द्वयोर्भेदसिद्धेः। नच विष्टयः प्रत्येकं न शिविकां वहन्ति मिलितास्तु वहन्तीति फलभेदेऽप्यभेद इति वाच्यं तदसिद्धेः। विष्टिसमुदायभेदस्यैकत्वाभ्युपगमात्, घटो न घटद्वयमितिप्रत्ययात्, अन्योन्यफलवैजात्याभावाच्च, मिलितविष्टिकर्म्मण एकविष्टिजन्यत्वेऽप्येकविष्टिकर्म्मणो मिलितविष्टिजन्यत्वे बाधकाभावात्। ननु योऽयमध्यस्तो भेदः, अध्यासनिवृत्त्या तत्प्रतिषेध एवानन्यत्वमिति कल्पना च दुष्टा, विषयाध्यासस्य पूर्व्वं निरस्तत्वात्। तथाच बुद्धिभेदादित्यादिकारिकांशस्य द्विरावृत्त्या पूर्व्वापरयोजनेतिध्येयम्। ७।

ननु व्यवहारभेदे सत्यपि तदनन्यत्वं सेत्स्यति तत्सत्ता-व्यतिरिक्तसत्ताकत्वाभावरूपत्वात्तस्य, विशिष्टधूमसत्ताया वह्नि-सत्ताव्यतिरिक्तत्वस्य प्रत्यक्षगोचरत्वेन व्यभिचारासम्भवादिति शङ्कापूर्व्वकं समाधानमाह—

तत्सत्त्वव्यतिरिक्तस्य सत्त्वस्याभाव एव चेत्।
अनन्यत्वं, न तद् युक्तं द्वैतापत्त्यादि दोषतः। ८।

तत् सत्त्वेति सत्त्वं ततो भिद्यते न वा? भिद्यते चेद्द्वैता-पत्तिः, नचेद् भिद्यते तद्व्यतिरिक्तत्वाभाव इति पर्य्यवस्यति प्रदत्तदोषश्चायं पक्षः, किञ्च तत्सत्ताव्यतिरिक्तसत्ता विद्यते न वा? विद्यते चेद् यत्रैव विद्यते तत्र नानन्यत्वसिद्धिः अथ न विद्यते प्रतियोग्यप्रसिद्धिः नचासत्ख्यात्यैव सेत्स्यति तत्रैव मानाभावात्। अन्यथाख्यात्यनभ्युपगन्तृणामसत्ख्यात्यभ्युपग-मस्यात्यन्तमयुक्तत्वात्। अतएव शुक्तिरूप्यादिकं दृष्टान्तीकृत्य तुच्छव्यावर्त्तकविशेषणादिघटितहेतुमादाय च नवीनवेदा-न्तिनां नैयायिकमार्गानुसारेण स्वपक्षस्थापनमपि नोपपद्यते, शुक्तिरूप्यादेरेवासिद्धेः। तस्मादनुपपन्नमनन्यत्वमित्यनन्यत्व-प्रतिपादकं भाष्यमप्रमाणम्। सूत्रजातन्तु परिणामवादाभि-प्रायकपूर्व्वपक्ष-तत्समाधानपरम्। तत्र "तदनन्यत्व"मित्यारभ्य 'धर्म्मान्तरेण वाक्यशेषा'दित्यन्तं पूर्व्वपक्षप्रसाधनाय 'युक्तेः-शब्दान्तराच्चे'त्यारभ्य 'यथाच प्राणादि'इत्यन्तं तु भेदसाधनेन तत्समाधानायेति न तदप्रमाण्यम्। तत्र पूर्व्वपक्षप्रसाधनं स्पष्टं समाधानं तु व्याख्यायते—'युक्तेः' कार्य्यकारणयोरभेदे

कार्य्यकारणभावव्यवस्था न स्यात् कार्य्यस्य स्वतः सिद्धत्वादित्यादिरूपायाः। 'शब्दान्तरात्' 'अथात आदेशो नेति नेति' 'अशब्दमस्पर्श'मिति 'पृथिव्या अन्तरे तिष्ठ'न्नित्यादिभ्यः प्रागुपदर्शितश्रुतिभिन्नश्रुतिभ्यः। भेद-बोधनात् नानन्यत्वमितिशेषः। 'पटवच्च' इति यथातन्तुपटयोरर्थक्रियादिभेदाद् दृश्यते भेदः तथासन्दिग्धाभेदेऽपि भेदोऽनुमातव्य इत्यर्थः। रूपवद्दृष्टान्तमुक्त्वा नीरूपदृष्टान्तप्रदर्शनाय सूत्रान्तरं 'यथाच प्राणादि' इति। यथाहि वह्निर्वायुप्राणवाय्वोः सत्यपि वायुत्वेनाविशेषे व्यक्तिभेदः कार्य्यभेदलिङ्गादनुमातव्य एवं सजातीययोरपि कार्य्यकारणयोर्व्यक्तिभेद इति। ८।

किञ्च—

वियत् प्रकरणे सूत्रद्वयं व्याख्यातमन्यथा।
तत्रास्ति पदवैयर्थ्यमेवमन्यत्र दृश्यताम्॥ ६।

वियदधिकरणे 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' इति "यावद्विकारन्तु विभागो लोकव"दिति सूत्रद्वयं यदन्यथा व्याख्यातं भाष्ये, तत्र पदवैयर्थ्यमस्ति तथाहि वियतो भाक्तोत्पत्तिवादनिरासाय प्रतिज्ञाहानिरित्यादि सूत्रद्वयम्। तत्र कृत्स्नस्य वस्तुजातस्य ब्रह्मणो व्यतिरेकाभावे आत्मविज्ञानेन सर्व्वविज्ञानमित्यर्थिकायाः श्रौत्याः 'प्रतिज्ञायाः' 'अहानिः' अव्यतिक्रमः स्यात् 'शब्देभ्य'श्च 'सदेव सोम्येदमग्र आसी'दित्याद्युत्तरश्रुतिभ्यश्च प्रतिज्ञासिद्धिरवगम्यते इति प्रथमसूत्रस्य भाष्यसम्मतोऽर्थः तथाच ब्रह्मवियतोरव्यतिरेकसिद्ध्यर्थं वियत उत्-

पत्तिः स्वीकार्य्येति भावः। गगनस्योत्पत्तिश्रुतिर्गौणीति यदुक्तं तन्निरासाय द्वितीयसूत्रं ये तावद् विकारास्ते विभक्ता दृश्यन्ते लोके घटपटादिवत् अविकृतन्तु न विभक्तमुपलभ्यते, अवगम्यते चाकाशस्य पृथिव्यादिभ्यो विभाग इति विकारो वियदिति भाष्यसम्मतस्तदर्थः। एतदर्थद्वयं न सम्भवति पदवैयर्थ्यात्, प्रथम सूत्रे 'शब्देभ्यः' इति व्यर्थं स्यात् नचात्मविज्ञानेन सर्व्व-विज्ञानप्रतिज्ञासाधनाय 'शब्देभ्यः' इति हेतुनिर्द्देशः, सिद्धाया एव तस्या अव्यतिक्रमस्य कार्य्याव्यतिरेकसाधकत्वौचित्यात्। अन्यथा अव्यतिरेकः शब्देभ्य इत्याकारकमेव प्रथमसूत्रं स्यात्, इतरांशस्य वैयर्थ्यात्। किञ्च प्रतिज्ञादिश्रुतेरव्यतिरेकादुत्पत्ति-रिति वक्तव्ये प्रतिज्ञाया अहानिरिति कथनमसङ्गतं प्रतिज्ञा-सिद्धिरित्युपेक्ष्य नञ्-प्रश्लेषघटित-सन्दिग्धार्थक-प्रतिज्ञाहानि-शब्दप्रयोगश्चासङ्गत इति। द्वितीये विभागश्चाकाशस्य पृथि-व्यादिभ्य इत्यर्थकपदसमुदायात्मकस्य वाक्यस्य वैयर्थ्यं विरुद्धार्थकत्वं स्यात्। तथाहि यथा प्रकृतिभूताया मृदो घटादिभ्यो विभागो नास्ति तथाकाशस्य भवन्मते पृथिव्यादिभ्यो विभागो नोपपद्यते आकाशस्य पृथिवी-प्रकृतित्वेन विभागा-सम्भवात्। "आकाशाद्वायुर्व्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी"-तिश्रुतेरत्रैवोपदर्शितत्वात् तदेतत्सूत्रद्वयभाष्यमसमञ्जसम्। तस्मादन्यथाव्याख्येयमेतत्। तत्र 'न वियदश्रुते'रितिपूर्व्वञ्च प्रतिज्ञासूत्रं वियन्नोत्पद्यत इति तदाकारः। प्रतिज्ञा-तार्थे प्रतिपादिते परस्तावदाक्षिपति 'प्रतिज्ञाहानि'रिति।

आकाशं हि शब्देभ्यो न व्यतिरिच्यते शब्दात्मकं ह्याकाशं तद्व्यतिरेकेणानुपलम्भात्। शब्दस्योत्पत्तिस्तु प्रत्यक्षसिद्धा तस्मात् वियन्नोत्पद्यत इति या प्रतिज्ञा सा हीयते। प्रतिज्ञाहानिश्च निग्रहस्थानविशेषः। इति प्रथमसूत्रार्थः। अत्र समाधीयते 'याव'दिति शब्दो ह्याकाशजन्मा नतु तयोरैक्यमस्ति विकारमात्रे प्रकृतितो भेदस्य लोकसिद्धत्वात् दधिदुग्धवत्। इति द्वितीयार्थः। अत्र न किञ्चिदनर्थकं विरुद्धार्थकं वेति वैयर्थ्यदोषो नास्ति। नच द्वितीयसूत्रस्य भाष्यसम्मतोऽर्थः, आकाशस्य पृथिवीप्रकृतित्वमनभ्युपगच्छतां परेषां मतमनुसृत्येति वक्तुं युक्तं, निजमते तस्य स्वरूपासिद्धत्वेन शास्त्रीयविचारे तत्प्रयोगानौचित्यात् किञ्चाकाशादिकं सोत्पत्तिकम्, आत्मान्यत्वे सति विभक्तत्वादिति प्रयोगे विवक्षणीये सावयवत्वं स्पर्शवत्कारणकत्वं वोपाधिरित्यस्य सुवचत्वात्। तस्मा'दाकाशवत् सर्व्वगतश्च नित्य' इति 'अन्तरिक्षममृत'मित्यादिश्रुतिप्रसिद्धाकाशस्य शब्दहेतुकाभिव्यक्तिरेव सम्भूतइत्यादि शब्देनावेदिता। नचैवम् 'एतेन मातरिश्वा व्याख्यातः' इत्यादि सूत्रीयातिदेशासङ्गतिरिति वाच्यम्। वायुरमृतमित्यादि श्रुत्या परमाणुरूपवायोर्नित्यत्वप्रतिपादनेन तत्सङ्गतेः। नन्वेवं पार्थिवादिपरमाणवोऽपि नित्याः सन्ति कथं मातरिश्वैवात्र गृहीत इति चेन्नैवं कार्य्यपृथिव्यादीनामेव सृष्टिप्रकरणीयश्रुतिषु बहुशो ग्रहणादत्र सूत्रे तदनुल्लेखेऽपि क्षतिविरहात्। 'असम्भवस्तु सतोऽनुपपत्ते'रिति सूत्रान्तरस्य वक्ष्यमाणत्वाच्च।

यत्तावत् सत् नित्यं तस्यैवासम्भवः अनुत्पत्तिः न केवलमाकाशस्य वायु परमाणूनां वा, कुतः अनुपपत्तेः कारणासम्भवादिति हि तदर्थः। नन्वेवं सतस्तेजस उत्पत्तिरिति वच्यमाणमनुपपन्नमिति चेन्न सत ईश्वरान्निमित्तकारणभूतात् कार्य्याणां तेजआदीनामुत्पत्तिरित्यत्र तस्य तात्पर्य्यात्। क्वचित् श्रुतौ तेजसः सृज्यवर्गप्राथमिकत्वेन निर्द्देशादत्रापि तन्निर्द्देशे वाधकाभावात्।

नन्वेवं कथं स्रष्टृतादात्म्याभिधानमित्याशङ्कया सूत्रयिष्यति 'तदभिध्यानादेव तु तल्लिङ्गात्सः' इति स्रष्टृ सृज्ययोरभेदाभिध्यानं यत् तदभिप्रेत्य 'सः' अभेदोपदेशः, कुतः 'तल्लिङ्गात्' 'सर्व्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति' प्रसिद्धोपासनविध्यन्वयलिङ्गात् भेदवोधकश्रुतिरूपलिङ्गाच्चेति तदर्थः। तथाच वियदाद्यधिकरणभाष्यमप्रमाणम् दिङ्मात्रमेतत्। एवमेव विरुद्धवत्-प्रतीयमान-सूत्रान्तरार्थः स्वयमूहनीयो धीमद्भिर्व्विरुद्धञ्च भाष्यमप्रमाणमित्युक्तमेवमन्यत्र दृश्यतामिति सर्व्वमनवद्यम्। ६।

इति गोतमसिद्धकुलोद्भव-नानादर्शन-परमाचार्य्य-
श्रीपञ्चानन-तर्करत्न-भट्टाचार्य्य-विरचितायां द्वैतोक्ति-
रत्नमालायां चतुर्थी यष्टिः।

---

अथ पञ्चमी यष्टिः।

न खलु श्रुतिमनुबध्नतः परमेश्वराराधनफलकस्य तर्कस्याप्रतिष्ठत्वमिति प्रतिष्ठिततर्कानुमतमेव तत्त्वं विनेयानां सुग्रहाय निगमयितुमियं निगमनयष्टिरारभ्यते। पूर्व्वनिगमविचारित प्रायार्था चेयम्। तत्परिहृतविचारविस्तरं सिद्धान्तमात्रमुच्यते—

जीवेश्वरौ पृथग्भावौ सजातीयौ च तत्त्वतः।
जीवास्त्वसंख्या विज्ञेया ईश्वरश्चैक एवहि॥ १।

तदैक्यचिन्तनान्मोक्षो भवेद्रागाद्युपक्षयात्।
देहादिभेददृष्टिस्तु स्वस्मिन् मोक्षैककारणम्॥ २।

ज्ञानयोगो ध्यानयोगो भक्तियोगस्तथापरः।
आत्मदर्शनमाधत्ते यत्र मोक्षः प्रतिष्ठितः॥ ३।

सर्व्वज्ञत्वसर्व्वकर्त्तृत्वादिना परमेश्वरमवगम्य तत्र प्रणवादिजपपूर्व्वको यः समाधिः स ज्ञानयोगः आरोपनिरपेक्षज्ञानसापेक्षत्वात्। ईश्वरे सर्व्वस्वरूपत्वाद्यारोपपूर्व्वकः समाधि ध्यानयोगश्चिन्तामात्रापेक्षत्वात्। शास्त्रोक्तचतुर्भुजादिमूर्त्तिविशेषमालम्ब्य तत्र निरतिशयानुरागो भक्तियोगः श्रवणकीर्त्तनादिरूपभजनसापेक्षत्वात्। स च मातरि स्तनन्धयस्येव चेत् परो भवति। तदितरश्चापरः। कर्म्मयोगश्च तदन्तर्गत एवेति संक्षेपः। बहुविस्तराश्चैते निबन्धान्तराद् वेदितव्याः। ३।

जीवेश्वरनभः-काल-परमाण्वादयो ध्रुवाः।
अध्रुवः कार्य्यसङ्घातो द्व्यणुकादिः प्रकीर्त्तितः॥ ४।

अदृष्टकालसाचिव्यादीशयत्नः फलोन्मुखः ।
सृष्ट्यादौ परमाणूनां कर्म्महेतुस्ततो भवन् ॥ ५ ।
तेषामन्योन्यसंयोगो द्व्यणुकारम्भणक्रमात् ।
कारणं स्थूलभूतानां सृष्टिरेवं प्रवर्त्तते ॥ ६ । ( युग्मकम् )

अदृष्टेति। अदृष्टं हि प्रवाहरूपेणानादि, तद्भेदाच्च प्राणिनां वैचित्र्यमिति नेश्वरस्य वैषम्यं नैर्घृण्यं वा शङ्कनीयम् । ५ ।

वन्ध्येषु भोगादृष्टेषु लोकानां सुप्तिकालवत् ।
प्रलयो जायते नूनं पुनः सृष्टिः पुनर्लयः ॥ ७ ।
अनादिसृष्टिपर्य्याये बहुकारणमेलकः ।
नियन्ता स्वयमीशोऽतः स्वातन्त्र्यं तस्य न च्युतम् ॥ ८ ।
वेदवक्ता जगत्कर्त्ता सर्व्वकर्म्मोपदेशकः ।
गुरुः सर्व्वस्य लोकस्य शब्दशक्तिप्रवर्त्तकः ॥ ६ ।

वेदवक्तेति। ईश्वरो हि सर्गादौ ब्रह्मा भूत्वा वेदमुपदिशति, कुलाल कर्म्मारादिरूपस्तत्तत्कर्म्म शिक्षयति, प्रयोजकप्रयोज्यकायद्वयमधिष्ठायाव्युत्पन्नान् जीवान् शब्दशक्तिं ग्राहयति, गामानयेति, गां वधानाश्वमानयेति च क्रमेण प्रयोजकोपदेशेन प्रयोज्यस्य प्रवृत्तिविशेषमुपलभमानो जीवः शब्दशक्तिं प्रतिपद्यते। इत्येतदर्थं परमात्मनो जीवादृष्टकृतशरीरसम्बन्धः। अतएव श्रूयते "बहुस्यां प्रजायेयेति" तत्र तेज

आदिविरहे शरीरासम्भवात् तैजसादिशरीरार्थं तेजआदि-सृष्टिस्तत्रव प्रतिपादिता। नतु तेजआदिरूपेण तस्य भवनं तदिच्छाविषयः। तथासति तत्तेजोऽसृजतेत्येवं न स्यात् किन्तर्हि तत्तेजोऽभवदित्यादि स्यादिति दिक्। सदेव सोम्येदमग्र आसीदिति तु निराकारत्वेनानभिव्यज्यमानविशेषं जगदिदं सतस्तस्मादविशिष्टमासीदित्यर्थकम्। शक्यते हि हंसपीतात् पयसोऽवशिष्टं नीरमभिलक्ष्य नीरमिदं पय एवासीदिति प्रयोक्तुम्, भेदेऽपि पयोनीरयोस्तदानीमनभिव्यक्त-विशेषत्वादिति। यद्वा प्रकरणमिदमुपासकस्याध्यारोप इति ज्ञानं माभूद् भवतु पुनरद्वैतज्ञानं तथैवोपासनासिद्धेः सौलभ्या-दित्येतदर्थकम्, तथाच सर्व्वस्यैवैतत्सन्दर्भस्य ब्रह्माद्वैतमर्थः, प्राक्तनो विचारस्तु प्रथमकल्पाभिप्रायेणेति बोध्यम्; आरोपो-पासना पुनः कल्पद्वय एव पर्य्यवसितार्थः। तस्मात् सर्व्व-मनवद्यम्। ९।

अनन्तं तस्य विज्ञानमद्वितीयमबाधितम्।
स नित्यः सर्व्वगः शुद्धो दुःखद्वेषाद्यसङ्गतः॥ १०।
तदुपासनसामर्थ्यादविघ्नं तत्त्वदर्शनम्।
अधिकारिप्रभेदेन विविधास्तदुपास्तयः॥ ११।

प्रकारान्तरेण भवदपि तत्त्वदर्शनं न निर्व्विघ्नं, निर्व्विघ्नं तु परमेश्वरोपासनफलम् तदुक्तं श्रीभगवद्गीतासु 'नेहाभिक्रम नाशोऽस्ति प्रत्यवायो नविद्यत' इति। ११।

तदस्मिन् कलिमलकलितमतिमानवानामीश्वराद्वैतवाचैव निरूढ़गर्व्वाणां वा वैधकर्म्मपरित्यागे कृतप्रयासानां वा समुज्जिहीर्षया सर्व्वशास्त्रसमन्वयार्थं द्वैतवादप्रधानं यदुपदिष्टं भगवता गौतमेन शास्त्रं यच्च तत् समानतन्त्रमौलूक्यदर्शनं तत्र श्रद्धावद्भिरीश्वर एव माता पिता गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृदित्याद्येकतमभावेन समाश्रयणीयः शास्त्रोक्तविधिना सेवनीयश्चेति सुगमः पन्थाः।

तदुक्तमभियुक्तैः,

"प्रदीपः सर्व्वविद्यानामुपायः सर्व्वकर्म्मणाम्।

आश्रयः सर्व्वधर्म्माणां सेयमान्वीक्षिकी मता॥" इति।

इह खलु साम्प्रदायिकसिद्धान्तमनुरुध्य प्रवर्त्तितो विचारः। ज्ञातानां निर्द्दोषं स्वरूपाद्वैतवादतत्त्वन्त्वस्मत्कृतदेवीभाष्याद् विस्तरेण ज्ञेयम्।

इति गौतम-सिद्धकुलोद्भव-नानादर्शन-परमाचार्य्य-
श्रीपञ्चानन-तर्करत्न-भट्टाचार्य्य-विरचितायां
द्वैतोक्तिरत्नमालायां निगमनाख्या
पञ्चमी यष्टिः।

---

अन्त्यबन्धनम्।

पञ्चाननोऽसहिष्णुः श्रीदुर्गापादपङ्कजं हित्वा।
विषयरसरक्तसक्तः सम्प्रति विकलस्त दाश्रयते ॥ १ ।
त्रिभुवनजननी सैका साधकभेदात् प्रकीर्त्तिता बहुधा।
अनल इव कर्म्मभेदान्मनसि ममास्तां सदा सदया ॥ २ ।
श्रीशङ्करं परमकारुणिकं प्रणम्य
याचे ममाचरणमेतदनागसेऽस्तु।
वाध्यं जगद् यदि तदंशभवे च भाष्ये
वाधार्पणाद् भगवतो भवतु प्रसादः ॥ ३ ।
सर्व्वदा विषयासक्तचेतसः कथमप्यसौ।
मम कण्ठगता माला विश्वेशस्मरणायतिः ॥ ४ ।

इत्यन्त्यबन्धनम्।

---

योजना।

न जाने तत्तत्त्वं निरवधिविभूतेर्भगवतो
यदद्वैतं द्वैतं जगति यदि वा स्यादवितथम्।
तथाप्यन्तःक्षोभक्षमविषयचिन्ताचयहरे
विचारे चातुर्य्यं प्रकटयितुमेषा मम कृतिः ॥

इति योजना।

समाप्तोऽयं ग्रन्थः।